SARASVATĪ BHAVANA GRANTHAMĀLĀ

*Vol. 103*

**General Editor**

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'

Director, Research Institute,

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.




# KALKIPURĀṆAM

for the first time critically edited by

PROF. DR. **ASOKE CHATTERJEE ŚĀSTRĪ**

M. A. ( Double ), Ph. D., D. Phil., D. Lit., Dip. Ger., Vācaspati, Kāvyatīrtha, Vedatīrtha, Purāṇatīrtha, Navyasmṛtitīrtha, Prācīnasmṛtitīrtha, Mahopādhyāya, Griffith Prizeman ( Double ), Umeshchandra Vidyāratna Prizeman.

*Professor and Head of the Department of Purāṇetihāsa*

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.

VARANASI

1972



Published by :
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi 2.

Printed by—
Ghanashyam Upadhyaya
Manager,
Varanaseya Sanskrit Vishvavidyalaya Press,
Varanasi.



सरस्वतीभवन-ग्रन्थमाला
( १०३ )

प्रधानसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थानसञ्चालकः
वाराणसेयसंस्कृतविश्वविद्यालयस्य

# कल्किपुराणम्

सम्पादकः
डॉ० अशोक चटर्जी शास्त्री
एम. ए. ( द्वितयम् ) वाचस्पतिः, पी-एच्. डी., डी. फिल्., डी. लिट्., डिप्. जर्.,
महोपाध्यायः, काव्यतीर्थः, वेदतीर्थः, पुराणतीर्थः, नव्यस्मृतितीर्थः,
प्राचीनस्मृतितीर्थः, ग्रीफिथ प्राइजमेन ( द्विवारम् ), उमेशचन्द्र-
विद्यारत्न प्राइजमेन।

प्राध्यापको विभागाध्यक्षश्च पुराणेतिहासविभागे,
वाराणसेयसंस्कृतविश्वविद्यालयस्य, वाराणसी

वाराणस्याम्
वै० सं० २०२९ १८९४ तमे शकाब्दे ई० १९७२

# भूमिका

भारतीये वाङ्मये वेदानामनन्तरं महद्गौरवभाञ्जि पुराणानि। कथोपकथनरूपा संवादरूपा वा तदीया सरणिर्मनोहरा। वेदेष्वपि दृश्यते सेति नार्वाचीना। पुराणानां प्रतिपाद्यं पुरातनकालसंबद्धमिति तदीयेन नाम्नैव ज्ञायते। अत एव भविष्यादिपुराणेषु भविष्यत्कालिक्यो घटना भूतकालिकक्रियाभिरपि वर्णिताः।

यद्यपि महापुराणान्यष्टादशसंख्याकानि, उपपुराणान्यपि तथा प्रसिद्धानि, तथापि महापुराणानां नियतसंख्यावन्नेयत्तोपपुराणानाम्। उपपुराणेष्वन्यतमं विवेच्यमानं कल्किपुराणं भविष्यपुराणवर्तनीमनुकुरुते। भागवतधर्मविषये श्रीमद्भागवतपुराणमनुवर्तते।

भगवतः कल्केरवतारवर्णनं भविष्यभागवतपुराणाभ्यां पूर्वमेव महाभारते ( वन० १९०-९१ ) दृश्यते। तत्र हरिवंशे ( १, ४१ ) ब्रह्मवैवर्तपुराणे ( १४० ) च कल्क्यवतार-स्थापनादिकस्योल्लेखः। महाभारते ( शान्ति० ३४८ ) मत्स्यपु० ( ४७, २४८-२४९ ) भागवते ( १, ३, २५ ) च कल्केर्जनको विष्णुयशा इत्यभिधः। महाभारते ( सभा० ५०; वनप० १९० ) तु विष्णुयशा इति नामधेयं कल्केरेवोल्लिखितम्। कल्किपुराणे (२,४) तु—

**शम्भले विष्णुयशसो गृहे प्रादुर्भवाम्यहम्**

इति जनकस्यैव नामधेयं विष्णुयशा इति। एवमेव कल्किदेहवर्णसंबन्धेऽपि वैमत्यम्। महाभारतस्य मत्स्यपुराणस्य च वर्णनानुसारेण कल्किदेहवर्णो हरितपिङ्गल इति। कल्कि-पुराणानुसारेण तु मेघश्यामः—

**नीलजीमूतसंकाशं दीर्घपीवरबाहुकम्।**
**किरीटेनार्कवर्णेन स्थिरविद्युन्निभेव तम्॥** इति
( ३१,४ )

## कल्किभविष्यपुराणवर्णनतुलना

यद्यपि कल्किपुराणस्य प्रत्यध्यायान्तं पुष्पिकायाम् 'इति श्रीकल्किपुराणेऽनुभागवते भविष्ये' इत्युल्लिख्यते, तथापि भविष्यपुराणीयकल्किकथया कल्किपुराणकथा नैकरूप्यं भजते। भविष्यपुराणे ( प्रतिसर्गपर्वणि चतुर्थखण्डे पञ्चविंशेऽध्याये ) कल्क्यवतारकथाऽष्टभिः श्लोकैरुपवर्णिता। तत्रायं सारांशः—

प्राप्तिस्थानम्—
प्रकाशनविभागः
वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी-२

मूल्यम् १८) रूप्यकाणि

# विषयसूची

संभलग्रामे विष्णुयशा ब्राह्मणो विष्णुकीर्तिरिति च तत्पत्नी। स कृष्णलीलामयं ग्रन्थं जनान् श्रावयिष्यति। नन्दिनो म्लेच्छास्तं द्विजं गृहीत्वा दृढैर्निगडैर्बद्ध्वा सपत्नीकं दृढायसे कारागारे निपातयिष्यन्ति। तत्रैव कारागारे निशीथे मार्गकृष्णाष्टमीदिने कल्किर्भगवान् अवतरिष्यतीति।

कल्किपुराणे तु जनकग्रामादिनाम परित्यज्य सर्वथा भिन्ना कथा। तथा मातापित्रोर्निगडबन्धो नोदीरितः। जन्मसमयश्च—

द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवः।
जातं ददृशतुः पुत्रं पितरौ हृष्टमानसौ॥ इति
( २,१५ )।

कल्किपुराणे कल्केर्मातुर्नामधेयं सुमतिरिति न तु विष्णुकीर्तिरिति।

भविष्यपुराणे ( प्रतिसर्गपर्वणि चतुर्थखण्डे षड्विंशेऽध्याये )—

तदा स भगवान् कल्किः पुराणपुरुषोद्भवः॥
दिव्यं वाजिनमारुह्य खड्गी वर्मी च चर्मधृक्॥
म्लेच्छांस्तान् दैत्यभूतांश्च हत्वा योगं गमिष्यति॥ १।
षोडशाब्दसहस्राणि तद्योगाग्निप्रतापिता।
भस्मभूता कर्मभूमिर्निर्जीवा भविता ततः॥ २।
ततोऽनुयोगं जनितो मेघो भूत्वा लयङ्करः।
प्रलयाम्रेण सा भूमिर्जलमध्ये गमिष्यति॥ ३।
तदा कलियुगो घोरो बलिपार्श्वं गमिष्यति।
गते कलियुगे घोरे कर्मभूमिं पुनर्हरिः।
कृत्वा स्थलमयीं रम्यां यज्ञैर्देवान् यजिष्यति॥ ४।
कल्किनो वदनाज्जातो ब्राह्मणो वर्ण एव हि।
बाह्वोः क्षत्रं विशो जान्वोः शूद्रो वर्णस्तदङ्घ्रयोः॥ ६।

इति वर्णनानुसारेण कल्किहते म्लेच्छादिगणे भूरियं जलमध्ये गमिष्यति, कल्केः सकाशाच्च पुनः सृष्टिर्भविष्यतीति। कल्किपुराणे त्वेतादृशं किमपि वर्णनं नास्तीति पुराणस्यास्य पुष्पिकोल्लिखितेन 'भविष्ये' इति पदेन भविष्यपुराणानुगमस्य तात्पर्यं नास्ति। कल्किपुराणमेव भविष्यत्कथानुवर्णनाद् भविष्यपुराणमिति तदाकूतं विशेषणतया ग्राह्यम्।

श्रीमद्भागवतपुराणवर्णनेन प्रायः साम्यं कल्किपुराणवर्णनस्य—



'यशोऽर्थे धर्मसेवनम्'

( श्रीमद्भाग० १२, २, ७ )

इत्ययं भागवतपुराणश्लोकांशः कल्किपुराणेऽविकलः ( कल्कि० १, ३० ) दृश्यते। कल्किपुराणस्य प्रथमाध्यायगतकलिप्रभावितानां जनानां वर्णनमाधिक्येन श्रीमद्भागवतस्य द्वादशस्कन्धीयवर्णनेन सादृश्यं बिभर्ति। श्रीमद्भागवते (१२,२,४)—'पाण्डित्ये चापलं वचः'। कल्किपुराणे ( १, ३१ )—'वाचालत्वं च पाण्डित्ये' इति। श्रीमद्भागवते ( १२, ३, ३८ ) कलौ शूद्राणां वर्णनम्—

'शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः' इति।

कल्किपुराणे तु—

'प्रतिग्रहरताः शूद्राः परस्वहरणादराः'

( १, ३० )

इत्येवमस्ति वर्णनं षोडशश्लोकतोऽष्टत्रिंशत्तमश्लोकपर्यन्तम्।

## रचनाकालः

भविष्यपुराणे यत्र कल्क्यवतारवर्णनं तस्मिन्नध्याये ततः पूर्वं च पुष्पिकासु 'कलियुगीयेतिहाससमुच्चये' इति कलियुगीयेतिहासः। अन्यत्र तु पुराणसादृश्यं पुष्पिकासु। तत्र कल्क्यवतारवर्णनातोऽव्यवहितपूर्वं द्वादशखीस्ताब्दात् सप्तदशखीस्ताब्दान्तानां भूपादीनां चरितं संदृब्धम्। वैयाकरणसिद्धान्तकौमुदीकारस्य भट्टोजिदीक्षितस्य, गीतगोविन्दकारस्य जयदेवस्य, श्रीरामानन्दस्वामिनः, रैदासस्य, अकबरस्य, सूरदासस्य, पुराणनिपुणस्य कवेस्तुलसीशर्मणः, मीरायाः, सलीमस्य, वानराननानां गुरुण्डानां ( आङ्गलदेशीयानां ) चोल्लेखस्तस्यात्यन्तमाधुनिकत्वं प्रख्यापयति। कल्किपुराणे यद्यपि तादृशं किमपि वर्णनं नास्ति, तथापि तस्य कथोपकथनविन्यासशैल्या सांप्रदायिकानां तिलक-( ४, १९-२० )-तीर्थादिवर्णनभङ्ग्या भविष्यपुराणकालात् तदीयं प्राचीनत्वं न सिद्ध्यति।

## कल्किपुराणगतेतिहाससामग्री

सम्भलग्रामे कल्किरवतरिष्यतीति प्रसिद्ध्या ग्रामोऽयं जनैरन्विष्टः। तत्र मरुदेवापी राजानौ कल्किः स्थापयिष्यतीति तयोर्वंशपरम्परामालोच्य तत्कालविचार आवश्यकः। कल्केरवतारसमये विशाखयूपो नाम नृप आसीदिति किन्तु तस्य वंशपरम्परोल्लेखो नास्तेऽ-

स्मिन् पुराणे। भगवतः परशुरामात् कल्किना शिक्षा प्राप्ता, तस्य चिरजीवित्वात्। बौद्धान् म्लेच्छांश्च हत्वा कल्किर्देवापिं मरुं च स्थापयिष्यति। भविष्यपुराणे तु—

विकटान्वयसंभूता गुरुण्डा वानराननाः।
वाणिज्यार्थमिहायाता गौरुण्डा बौद्धमार्गिणः॥

इति वर्णनेन गुरुण्डानां बौद्धमार्गित्वं दृश्यते। एवं च तादृशाः सर्वे बौद्धमार्गावलम्बिनो भवेयुः संप्रति। कल्केर्विष्णवतारत्वेन तद्भक्ताः सर्वे वैष्णवा इति विशाखयूपोऽपि वैष्णवो जातः (३,२८)। यज्ञोपवीततिलकादिवर्णनं (४,१६-२०) कालनिर्णयाय भवेत्।

पद्मायाः स्वयम्वरे समागतानां भूपानां नामानि पर्यालोचनीयानि—रुचिराश्वः, सुकर्मा, मदिराक्षः, दृढाशुगः, कृष्णसारः, पारदः, जीमूतः, क्रूरमर्दनः, काशः, सुधांशुः, वसुमान्, कङ्कः, क्रथनः, सञ्जयः, गुरुमित्रः, प्रमाथी, सृञ्जयोऽक्षमश्चेति।

कल्किर्गरुडादिकं विमानं वा परित्यज्य तुरगमारुह्यासिना शत्रून् संहरिष्यतीति वर्णनं तुरगवाहनप्रधानकालमिङ्गति, न तु साम्प्रतिकं विज्ञानप्रधानं यन्त्रयुगम्। पुराणेऽस्मिन् भुशुण्ड्यादिचर्चाऽपि कृताऽस्ति।

कीरद्वारा सिंहलराजपुत्र्याः पद्मायां अनुरागं ज्ञात्वा कल्केस्तत्र गमनं विवाहश्च। इदमपि वर्णनं तं कालं प्रति संकेतयति, यस्मिन् कपोतादिकाः पक्षिणः संदेशहरत्वेन नियोज्यन्ते स्म। अष्टमेऽध्याये विष्णुपूजाविधिः पर्यालोचनीयः।

तव चक्षुर्युगं पद्मरागादरुणमुज्ज्वलम्।
रत्नसंघट्टितमहं करोमि मनसा प्रियम्॥ ८,१६।
कन्धरं सूर्यकान्तेन मणिना स्वर्णघट्टिना।
करोम्याच्छादनं चारुमुक्ताभिः पक्षतिं तव॥ १७।
पतत्रं कुङ्कुमेनाङ्गं सौरभेणातिचित्रितम्।
करोमि नयनानन्ददायकं रूपवत्तमम्॥ १८।
मुक्तागुच्छमणिव्रातघर्घरेणातिशब्दितम्।
पादयोर्नूपुरालापनादितं त्वां करोम्यहम्॥ १९।

इत्येतादृशं वर्णनमपि तादृशं समयं सूचयति। शुकस्य पक्षिणः किं खाद्यमास्वाद्यं वा प्रियं भवतीत्यपि विवेचनीयतामर्हति। इह तु (८, ३२) 'पयः पानेन तर्पयन्' इति जलपानेन दुग्धपानेन वार्थः। कीराणां तु फलानि भवन्ति रुचिरखाद्यानि।



सिंहले स्त्रीत्वमापन्ना राजानः कल्केराज्ञया रेवायां स्नात्वा पुंस्त्वमापन्नाः (१०,१८)। सिंहले रेवाया अभावात् स्थानादिकस्य पर्यालोचनमपेक्ष्यते। पुंस्त्वमापन्नै राजभिः कृतायां स्तुतौ कल्किर्बुद्धावतार इति संकीर्तितम्, किन्तु तत्रैव 'अधुना कलिकुलनाशावतारो बौद्धपाषण्डम्लेच्छादीनां च वेदधर्मसेतुपरिपालनाय कृतावतारः' इति दृश्यते।

कल्केस्त्रयो भ्रातरः—कविः, प्राज्ञः, सुमन्त्रश्चेति। पद्मायां कल्केर्द्वौ पुत्रावभूताम्—जयो विजयश्चेति। रमायां च द्वौ पुत्रौ—मेघमालो बलाहकश्चेति। अश्वमेधयज्ञप्रसङ्गे सेनागणैः परिवृतः कल्किर्दिग्विजयाय प्रयातः। तत्रादौ वेदधर्मबहिष्कृतं बुद्धालयं कीकटं पुरं गतः। तस्य शासकस्य मगधराजस्य बौद्धस्य जिनस्य तस्यानुजस्य शुद्धोदनस्य चैतिह्यं विचारणीयम्। स जिनो वृषभमारुह्य योद्धुमागतोऽसिपाणिः। कल्किना संबोधिता जिनसेना सनातनधर्मिणां बौद्धानां च शास्त्रार्थं स्मारयति—

रे बौद्धा मा पलायध्वं निवर्तध्वं रणाङ्गणे।
युध्यध्वं पौरुषं साधु दर्शयध्वं पुनर्मम॥ (१४,३)
दीनपुत्रा अतिदीना हीनस्वबलपौरुषाः।
वैष्णवाः साधवो यद्वद् बौद्धैर्नाम तिरस्कृताः॥ इति (२०,१६)

बौद्धैः सह युद्धे प्रवृत्ते पुराणकर्ता तान् 'म्लेच्छगणान्' इति स्मरति (१५, १)। तृतीये श्लोके तेषां नामानीत्थम्—कपोतरोमा, काकाक्षः, काककृष्णाद्य इति। वस्तुतो गुरुण्डा बौद्धा इति कृत्वा म्लेच्छरूपं संबोधनम्।

कुम्भकर्णस्य पौत्र्याः कालकञ्जस्य महिष्या विकञ्जस्य च जनन्याः कुथोदर्या विकञ्जं स्तनं पाययन्त्या मुखं ससैनिकः कल्किः प्रविष्टः। ततः—

योनिरन्ध्राद् गजरथास्तुरगाश्चाभवन् बहिः।
नासिकाकर्णविवरात् केऽपि तस्या विनिर्गताः॥ (१६, ३६)

वर्णनमिदं गुलीवरकथां स्मारयति। कृष्णकथासाम्यं दर्शयता च कविना सर्परूपराक्षसस्योदरं प्रविष्टस्य सगोपस्य कृष्णस्य कथाऽनुकृता। मृतायां राक्षस्यां पञ्चवर्षीयः स्तनंधयः शिशुः कल्किना तत्सैन्येन च युद्ध्यति।

अष्टादशेऽध्याये देवापिना कथितायाः स्ववंशावल्या अनुशीलनेन कालनिर्धारणं सुकरम्। ययातिवंशीयप्रदीपकपुत्रोऽयं देवापिरिति। मथुरायां शय्याकर्णान्, उष्ट्रमुखान्, एकजङ्घान् विनोदरांश्च पुत्रान् हत्वा देवापिं हस्तिनापुरपत्तनेऽभिषेक्ष्यति कल्किः (१८, २५-२६)। यथान्यपुराणादिषु खशकाम्बोजकशबरबर्बरादीनामुल्लेखस्तथैवेहापि (२०, ३१) परम्परा-

निर्वाहमात्रमिदम्। एवमेव देवापिनापि चोनैर्बर्बरैः, विशाखयूपेन च पुलिन्दैः श्वपचैः सह युद्धमकारि (२०, ४१)। अग्रेऽप्येतेषां पराजयचर्चा द्रष्टव्या (२१, ११-१२)। कोक-विकोकौ दानवावश्यं पर्यालोचनीयौ। तौ वृकासुरस्य पुत्रौ शकुनेश्च नप्तारावास्ताम्। गार्ग्य-भार्ग्यविशालसुमन्त्रादयः कल्केर्योद्धारो निषादान् पारदांश्च विजिग्युः।

दिग्विजयप्रसङ्गे भल्लाटनगराधीशेन शशिध्वजेन सह समजनि जन्यं घोरम्। पर्यन्ते कल्किभक्तायाः सुशान्ताया आग्रहेणात्मनः कन्या समुद्वाहिता। कल्किर्जामाता जातस्तयोः।

महेन्द्रशिखरात् समागतं स्वशिक्षागुरुं परशुरामं पर्यङ्केऽमूल्यवस्त्राढ्ये शाययित्वा कल्किर्मुदं ययौ। तस्यैव चाशिषा जातः पुत्रलाभः। परशुरामस्य पर्यङ्के शयनवर्णनमसाम्प्र-समनैतिहासिकमपि।

यद्यपि केषाञ्चिन्मतेन चर्चितानां देशकालराक्षसादीनां नामानि कल्पनामात्रम्, तथापि विद्वद्भिः पुराणानां पर्यालोडनपूर्वकं पर्यालोचनीयानि।

## कल्केरवतारचरितसमीक्षा

भारतीये वाङ्मये सिंहासनमधिरुह्य ब्राह्मणकृतस्य राज्यशासनस्य परिचालनविषये नोपवर्णनम्। यद्यपि भगवता परशुरामेण भूर्जिता, तथापि सिंहासनमारुह्य शासनं न कृतम्। कल्किपुराणे ब्राह्मणेन कल्किना राज्यं कृतमित्यस्मिन् पुराणे नावीन्यम्। भविष्यपुराणे परशुरामवदेतत्कृतो भूविजयस्ततश्चास्मादेव सृष्टिर्वर्णिता, न तु कल्किपुराणवर्णितकल्किकृत-राज्यशासनवर्णनम् (३०, ४५)।

चिरजीविनः परशुरामस्य सकाशात् कल्केः शिक्षाप्रापणम्। तद्गृहमागस्य चामूल्य-वस्त्राढ्ये पर्यङ्के शयनमस्य पुराणस्य वैचित्र्यं प्रकाशयति। महाभारतकालानन्तरं द्वापरे कलियुगारम्भे वा चिरजीविनः परशुरामस्य सन्नीडात् केनापि कापि शिक्षा प्राप्ता भवेदित्ये-तादृशं वर्णनं नोपलभ्यते। पृथिवीराजचौहानेन तस्माद् धनुर्विद्या समधिगतेति कर्णाकर्णिकया श्रूयते। परमतपस्विनो ब्राह्मणस्य महार्हे पर्यङ्के शयनमप्यस्य पुराणस्य नूतना कल्पना।

शिवाराधनेन कल्किर्वररूपेणाश्वमसिं शुकं चासादितवान्। केवलाश्वरूपवाहन-कल्पनाप्यनितरसाधारणी। पुराकाले कस्यचिद् विशिष्टस्य पुरुषस्य रथाद् विच्युतं केवल-मश्वमारुह्य युद्धादिकार्यवर्णनं नासाद्यते। मुगलकालप्रभावोऽयम्। धनुरादि विहाय केवले-नासिना योधनमपि नवीनमेव। सन्देशहररूपेण शुकस्योपयोगोऽपि मुगलकालिककपोतादेः संदेशहरत्वेन प्रेषणवन्नवीनमेव। भगवता रामेण सीतासकाशं प्रेषितो हनूमान्। श्रीकृष्णेन



गोपिकासकाशं प्रेषित उद्धवः। एवमेव कल्किना भाविन्याः पत्न्याः पद्मायाः सकाशं प्रेषितः सर्वज्ञः शुकः।

यद्यपि श्रीकृष्णवदैश्वर्यप्रदर्शनं चतुर्भुजरूपादिदर्शनं श्रीकृष्णचरितमनुवर्तते, तथापि सर्वत्र निर्वाहो न जातः—

मुष्टिभ्यां वज्रकल्पाभ्यामब्रवीत् कल्किमोजसा।
स कल्किस्तत्प्रहारेण पपात भुवि मूर्च्छितः॥ इति (२३,१५)

## कृष्णस्योपमानत्वे पद्मे

कल्किपुराणे कल्केस्तच्चरितस्य वा सादृश्याय यदि केनाप्युपमा दश्यते, तदा भगवता कृष्णेनैव नैवान्यैरवतारपुरुषैः। यद्यपीन्द्रशिवाभ्यां सहावश्यमुपमा (१,२७), तथापि तयोरवतारपुरुषाभावः। कल्केर्जन्मदिने वसुधा स्वकीयां पयःसुधाम्, मातृका च मङ्गलवचः कृष्णजन्मदिन इवादाताम् (१,१७)। भक्तिभक्तमाहात्म्यनामके षड्विंशेऽध्याये 'यथावतारः कृष्णस्य तथा तत्सेविनामिह' इति द्रष्टव्यम्। एवमेव—

कृष्णे भावमनन्यमेवममलं हैयङ्गवीनं नवं
लब्ध्वा संसृतिनाशनं त्रिभुवने श्रीकृष्णतुल्यायते॥
(२६,२८)

अतोऽहं कल्किरूपाय कृष्णाय परमात्मने
(२७,३४)

मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये।
यथावतारे कृष्णस्य सतो दुष्टनिपीडने॥
(३०,२०)

व्रतादिप्रसङ्गेऽपि नास्ति सीताव्रतोल्लेखः। एकत्रिंशत्तमेऽध्याये 'कल्केरभिमतं ज्ञात्वाकारयद् रुक्मिणीव्रतम्' इति रुक्मिणीव्रतनिरूपणमेव।

## दर्शनम्

मायादर्शननामक एकादशाध्यायेऽनन्तमायानिरूपणाख्ये द्वादशे चाध्याये सृष्टिः (१२, १३-१४), मायास्वरूपम् (१२, १२), संसारकारणरूपोऽहङ्कारः (१२, १५), तन्मात्राणि महाभूतानि (१२, १६) वर्णितानि सन्ति। मायाया वशेनात्मविस्मृतिः (१२, १८), मायाया बलवत्त्ववर्णनं च हृदयस्पर्शि। मायाया मोहवशाद् जीवपुरुष आत्मानं विस्मरति (१२, १९)। इन्द्रियनिग्रहेण मनोनिग्रहः स्वाभाविकः। इन्द्रिया-धिष्ठातृदेवानां नामानि वर्णितानि।

## कल्किपुराणगता भक्तिः

गुरौ प्रसन्ने भगवान् प्रसीदति । वाङ्मनोबुद्धीन्द्रियगणैः सह पूर्वोक्तं ध्यात्वा एकान्तभावविद् विद्वान् आत्मानं हरावर्पयेत् । सेव्यसेवकभावेन भक्तिरनुष्ठानीया (२५,३७-४४)—

सेव्यः कृष्णः सेवकोऽहमन्ये तस्यात्ममूर्तयः ।
कृष्णमतिर्मनस्यास्तां भक्तकल्याणकारिणी ॥ ३७ ।
भक्तस्यापि हरौ द्वैतं सेव्यसेवकवत् तदा ।
नान्यद् विना तमित्येव क च किञ्चन विद्यते ॥ ३८ ।
नृत्यत्युद्धतवद् रौति हसति प्रैति तन्मनाः ।
विलुण्ठत्यात्मविस्मृत्या न वेत्ति कियदन्तरम् ॥ ३९ ।
एवंविधा भगवतो भक्तिरव्यभिचारिणी ।
पुनाति सहसा लोकान् देवदानवमानुषान् ॥ ४० ।
भक्तिः सा प्रकृतिर्नित्या ब्रह्मसंपत्प्रकाशिता ।
शिवविष्णुब्रह्मरूपा वेदाद्यानां वरापि वा ॥ ४१ ।
उच्छिष्टमवशिष्टं वा पथ्यं पूतमभीप्सितम् ।
भक्तानां भोजनं विष्णोर्नैवेद्यं सात्त्विकं मतम् ॥ ४४ ।

षड्विंशेऽध्याये तु दृष्टभक्तिफलोदया भक्ता भागवतीं मायामाश्रित्य प्रभुदासभावेन पुष्कलं सुखं लभन्ते—

यदि विष्णुः स सर्वत्र तदा कं हन्ति को हतः ॥ ११ख ।
हन्ता विष्णुर्हतो विष्णुर्वधः कस्यास्ति तत्र चेत् । १२क ।
अतो भागवतीं मायामाश्रित्य विधिना यजन् ।
प्रभुदासभावेनैव सुखं लभते पुष्कलम् ॥ १४ ।
मोक्षं न कामयन्ते ते दृष्टभक्तिफलोदयाः ।
मुक्त्वा लभन्ते जन्मानि हरिप्रेमविकाशकाः ॥ २३ ।
निर्ममो निरहङ्कारः सर्वतो विरतो भव ॥ (३०,३९ख)

इति वैष्णवसंप्रदायोचितभक्तिप्रतिपादनम् ।



## पुराणस्यास्य वैष्णवधर्मः

चक्राङ्कितो वैष्णवो वैकुण्ठं लभते ( २५, १२-१३ )—

चक्राङ्कितं शिलागङ्गामरणादपि तत्क्षणात् ।
ज्योतिर्मयविमानेन सद्यो भूत्वा चतुर्भुजौ ॥
प्राप्तौ वैकुण्ठनिलयं सर्वलोकसुखावहम् ।

मन्त्राक्षरलेखनेन ज्वरादिनाशोपायः सप्तविंशेऽध्याये वर्णितः—

समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
ऐकाहिकं ज्वरं हन्ति लिखनं यस्तु पश्यति ॥ १७ ।
इति मन्त्राक्षरं द्वारि लिखित्वा तालपत्रके ।
यस्तु पश्यति तस्यापि नश्यत्यैकाहिकज्वरः ॥ १८ ।

पर्यन्ते वैष्णवधर्मस्य दिग्दर्शनम् ( २९, २ )—

त्वं वैष्णवो व्यासशिष्यः स राजा हरिसेवकः ।
यावत् कथा हरिकथा सात्रोच्या वाग्विशुद्धये ॥ इति ।

सप्तमेऽध्याये दशमश्लोकान्ते नारायणस्तवादौ 'ओं नमो नारायणाय' ( स्वाहा ) इति वैष्णवानाम् अष्टाक्षरमन्त्रोच्चारणं पद्मया कृतम् ।

## कल्किपुराणगता देवादिस्तुतयः

महापुराणेषूपपुराणेषु च भक्तैः कृता देवादीनां स्तुतयः स्तवा वा नूनं विशिष्टो निधिः । श्रीमद्भागवतपुराणे वेदस्तुतिर्निकामं महनीया । कल्किपुराणे सप्तसंख्याकानां स्तवानां वैशिष्ट्यम् । ते चेत्थम्—

१. कल्किकृतः शङ्करस्तवः ( ३, १४ ), २. पद्माकृतो नारायण-( कल्कि )-स्तवः ( ७, ११-३० ), ३. श्रीभावप्रातराजभिर्विहितो गद्यमयः स्तवः ( १०, २१ ), ३. सुशान्ताकृतकल्किस्तवः ( २४, ८ ), ५. शशिध्वजकृतमायास्तवः ( २९, ६-१२ ), ६. देवैर्विहिता कल्किस्तुतिः ( ३३, ८ ), ७. ऋषिभिः कृतो गङ्गास्तवश्च ( ३४, ४-१२ ) । मनोहरेषु सर्वेष्वेतेषु स्तवेषु गङ्गास्तवो मनोहरतमः ।

## व्रतादिविधानम्

कल्किना पुत्रलाभाय पृष्टो भगवान् परशुरामो रुक्मिणीव्रतमुपदिदेश ( ३१, १ )। द्वापरयुगस्थाया रुक्मिण्यास्तद्व्रतं त्रेतायुगस्थया सीतयापि ( ३१, ४० ) समनुष्ठितम् ! कल्पान्तरीयकथात्वेन समादधति पण्डिताः। व्रतप्रसङ्गे पट्टसूत्रं करे बद्ध्वा बहवो द्विजा भोजनीयाः ( ३१, ४३ ) इत्येतादृशं विधानमर्वाचीनमेव।

## पुराणस्यास्य साहित्यिकं गौरवम्

देवादिस्तवेषु कमनीया काव्यच्छटा सातिशयं मनोहारिणी। अलङ्कारेषूपमा भूयिष्ठतया समाश्रिता। द्वित्रस्थानेषु रूपकोऽलङ्कारोऽपि दृश्यते। 'गजः प्रतिमजेनेव दन्ताभ्यां सगदा-वुभौ' (१४, ३१) इति युध्यतोर्वर्णनम्। विक्षता योद्धारः संन्यासिवद् दृश्यन्ते स्म (१५, ७)—

भस्मना गुण्ठितमुखा रक्तवक्त्रा निरावृताः।
विकीर्णकेशाः परितो भान्ति संन्यासिनो यथा॥

इत्यत्र 'विकीर्णकेशाः' इति विशेषणं संन्यासिनामप्रायोगिकम्। यदि सकेशानां विशिष्टानां संन्यासिनां विशेषणत्वम्, संन्यासित्वं न घटते तदीयं तदा।

रूपकस्योदाहरणं द्रष्टव्यं संभोगक्षतयोषारूपसेनावर्णनरूपम् ( १४, २ )—

सेनाङ्गनां तां रतिसङ्गरक्षतीं
रक्ताक्तवक्त्रां विधृतोरुमध्याम्।
पलायतीं चारुविकीर्णकेशां॥
विकूजतीं प्राह स कल्किनायकः॥ इति।

पद्माकल्किसाक्षात्संवादात्मको नवमोऽध्यायः साहित्यिकदृशा हृदयावर्जनीयः। तत्र सखीभिः सह पद्माकृताया जलक्रीडायाः प्रसङ्गे—

तासां मुखामोदमदान्धभृङ्गा विहाय पद्मानि मुखारविन्दे।
लग्नाः सुगन्धाधिकमाकलय्य निवारिताश्चापि न तत्यजुस्ते॥

इत्येतादृशाः श्लोकाः कालिदासवर्णनपद्यानुकारिणः। यद्यप्यध्यायान्तेऽप्येवमेव सरसाः श्लोकाः, तथापि पद्मां प्रति भगवता कल्किना प्रयुक्ता भाषा नौचित्यमावहति। तत्र 'जगाद कामाकुलितः स कल्किः' ( २५ ), 'समागमस्ते कुशलाय मे स्यात्' ( २६ ), 'कामाहिदष्टस्य विषातुरस्य' ( २७ ), 'रम्भोरु सम्भोगसुखाय मे स्यात्' ( ३१ ), 'कामाहि-दष्टस्य ममास्तु शान्तये' ( ३२ ) इत्याद्युक्तयो भगवतो मुखादुद्भवन्त्यो न शोभन्ते। अन्ये



श्लोकाः काव्यच्छटां विकिरन्तो मनोहारिणः। यद्यप्येवमेव पद्मारमाभ्यां पुत्रोत्पत्त्यनन्तरं कल्किरासवर्णनात्मकेऽध्याये रसोद्भावः, तथापि 'कार्यमन्यन्न बुबुधे स्त्रैणश्च कामलम्पटः' (८ इति कल्किकृते स्त्रैण-कामलम्पटादिविशेषणानि कथञ्चित् पुत्रोत्पत्तेः पूर्वं भूषणान्यासन्, न तु पुत्रोत्पत्त्यनन्तरम्।

## छन्दांसि

यथा पुराणानि प्रामुख्येनानुष्टुप्छन्दसि लिखितानि दृश्यन्ते, तथात्रापि निर्वाहः। मध्ये मध्ये वसन्ततिलका, उपजातिः, शार्दूलविक्रीडितम् इत्यादीन्यपि छन्दांसि प्रयुक्तानि।

## भाषा

पुराणस्यास्य भाषा सुललिता प्रसन्ना च। क्वचित् क्वचिद् वाक्यबन्धो विश्लथः ( १६, १३ )—

'चलन्तीं वीक्ष्यते सर्वे स्तम्भिता विस्मयान्विताः'। इत्यत्र 'चलन्ती वीक्ष्यते सर्वैः स्तम्भितैर्विस्मयान्वितैः' इति, आहोस्वित् 'वीक्षन्ते स्तम्भिताः सर्वे चलन्तीं विस्मयान्विताः' इति वा रीत्या श्लोकनीयमासीत्। 'चकार उररी निजम्' ( १७, २९ ) इत्यत्र व्यत्यस्तता। 'मरणोऽभूदिति ज्ञात्वा' ( २७, ३५ ) इत्यत्र लिङ्गातिक्रमः। 'लप्स्यामि' ( ३०, २४ ) इत्यत्र पदक्रमः। 'मिष्टान्नम्' ( ३१, ३२ ) इत्यत्र 'मृष्टान्नम्' इति भाव्यम्। 'पाणिपादौ' ( ७, ६ ) इत्यत्र च 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति पाणिनीयेन नियमेन 'पाणिपादम्' इत्युचितम्।

## संक्षिप्तं विवरणम्

अनुसन्धानकार्यदक्षा जानन्त्येव निबन्धलेखनादौ संक्षिप्तस्य विषयविवरणस्य महिमानम्। वाल्मीकीये रामायणे भगवता वाल्मीकिना मूलरामायणरूपेण रामायणस्य संक्षिप्तं विवरणमादावेव संदृब्धम्। इह पुराणे तु पर्यन्ते पञ्चत्रिंशेऽध्याये समुपन्यस्तं तद् दर्शयति कामपि नव्यताम्। अन्ते पुराणान्तिमं श्लोकमुद्धरन्नुपसंहरामि—

सजलजलददेहो वातवेगैकवाहः
करधृतकरवालः सर्वलोकैकपालः।
कलिकुलवनहन्ता सत्यधर्मप्रणेता
कलयतु कुशलं वः कल्किरूपः स भूपः॥

## प्रस्तुतं संस्करणम्

यद्यपि नेदं पुराणं प्रथमतया प्रकाशमानीयते, तथापि प्रकाशितचरैः संस्करणैस्त्रिभिर्हस्तलेखैश्च सह पर्यालोचनपूर्वकसंपादितम् आलोचनात्मकं संस्करणमिदं सर्वतः प्रथमं श्रीमतां करसरोरुहयोरुपायनीकुर्वतो मे जाजायते महान् प्रमोदः। संस्करणस्य संपादकप्रवरः पुराणेतिहासविभागाध्यक्षः प्राध्यापकश्च डॉ० अशोकशास्त्रिमहाभागः सहार्दमभिनन्दनार्हः। तदीयेनैवानारतेन श्रमेण लघु भवदन्तिकमुपेतं संस्करणमेतत्। ईक्ष्यसंशोधनादिकमपि सर्वं कार्यं शास्त्रिमहोदयेनैव संपादितम्। तत्प्रेरितेन सत्स्वपि विविधेषु लेखनादिकार्येषु, कार्यालयीयकार्यव्यस्तेनापि चत्वार्येव दिनानि मया रचितेयं भूमिकेति भूयो भूयः साधुवादार्हो महानुभावो मन्ये, अन्यमपि महार्हं पुष्पाञ्जलिं शारदाचरणसरोरुहयोरर्पयिष्यतीति।

श्रीकृष्णजन्माष्टम्याम्<br>२०२९ वैक्रमाब्दे<br>वाराणस्याम्

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>संचालकः<br>अनुसन्धानसंस्थानस्य<br>वाराणसेयसंस्कृतविश्वविद्यालये

# PREFACE

KALKI-PURĀṆA, an important one among the UPAPURĀṆAS, is, now, for the first time being critically edited. Although it has been published several times by different publishers at various places of the country, none of which can unfortunately claim to be critical. In thirty-five chapters the heroic exploits of KALKI, said to be the latest incarnation of God among the Hindu pantheon, have been described. He put an end to the advancing attempt of the KALI age which has a disastrous effect on the society. In fact, the wretched condition of the people and the society under the evil influence of KALKI has been painted in the very first chapter of it. In order to get rid of KALI's evil influence and purge the society of the gross misconduct and injustice, and save the earth from total annihilation, the Lord paid heed to the mass prayer of the Gods, took his birth in the village of ŚAMBHALA, set on a religious march, defeated antagonists including the Bauddhas and others and reestablished DHARMA. All other good things such as sacrifice, benevolence, penance which were completely demolished by the advent of KALI, came to be revitalised and the people who served the ŚŪDRAS, sold Vedas, carried on merchandise of liquid thing, meat etc., came into contact with wives of others became the bubbles that burst out at the first contact.

Although this PURĀṆA can be regarded as more or less a Vaiṣṇava-purāṇā, examples are not rare where attempts have been made to incorporate it some verses or even one entire chapter wherein hands of the Śaivas are visible. A few verses in apotheosis of ŚIVA, the entire fourth chapter which describes a boon granted by ŚIVA may be referred to in this connection to substantiate this contention. The Vaiṣṇava supremacy, however, continued to dominate over others and the devotees being eager to propagate their tenets have brought forth

several passages —the seventh chapter entitled "HARIBHAKTI" requires special mention in this regard, the integrity of which may be questioned.

The fourth chapter which has been designated as the "War against the Bauddhas" and the fifth chapter termed as the "Annihilation of the Bauddhas and the Mlecchas" are most important in determining the age of the KALKI-PURĀṆA. These two vividly narrate the victorious march of the vedic Hindu DHARMA—the fact clearly refers to the advent and propagation of the Hindu DHARMA by ŚANKARĀCĀRYA—and the DIGVIJAYA of KALKI in this connection reminds one of the DIGVIJAYA of this great savant. It was ŚAṄKARĀCĀRYA who had given the death blow to the Bauddhas and other antagonists of the vedic DHARMA. The suggestive similarity between these two incidents lead one in all probability to infer the influence of ŚANKARA's attempt on establishing the vedic DHARMA on KALKI's similar attempt recorded in the KALKI-PURĀṆA The other limit of the date of its composition is not very difficult to ascertain. The twentieth chapter deals with an allegorical combat between KALKI and KALI which resulted in an ultimate defeat of the latter. But the participants on both sides were none other than some abstract qualities personified. As for example, Contention fought with Greed, Truth with Pride. Thus there were characters, namely, Fearlessness, Happiness, Health, Appeasement, Memory on KALKI's side and similarly Fear, Sorrow, Ill-health, Exhaustion and Infirmity sided with KALI. Moreover, in the very first chapter one meets with such characters as Falsity, Conceit, Covetousness, Anger, Violence, Fear, Death, etc. who are said to belong to the family of ADHARMA. It is not very difficult to conjecture that some of the Sanskrit allegorical dramas of the later ages may probably be indebted to the KALKI-PURĀṆA so far as the naming of the different characters used in these dramas is concerned. In PRABODHACANDRODAYA of KṚṢṆAMIŚRA such typical characters as Faith ( श्रद्धा ), Compassion (करुणा), Tranquility (शान्ति), Friendship (मैत्री), Endurance (क्षमा) and Indiscrimination (काम), Anger (क्रोध), Covetousness (लोभ), Pride ( अहङ्कार ), Conceit (दम्भ) are found. KṚṢṆAMIŚRA is supposed to have flourished in the eleventh century A. D. Then in all probability the KALKI-PURĀṆA may have been composed during the ninth and tenth century A. D. The lateness of its composition may be corroborated by the apparent silence of the different digest writers of the DHARMAŚĀSTRAS who have never referred to the KALKI-PURĀṆA.



Dr. R. C. Hazra believes the KALKI-PURĀṆA to be a product of Bengal because all the manuscripts of it are written in Bengali script. Unfortunately, he has jumped to that conclusion without carefully examining all its available manuscripts. One of the manuscripts used by me has been written in Devanāgarī script and not in Bengali script. The detailed description of the manuscripts used by me and the chapter-wise analysis of the contents of this PURĀṆA have been given in my SAMĪKṢAṆAM written in Sanskrit.

It is a pleasure to record my heartfelt thanks to the members of the publication committee who have been kind enough to include it in the Sarasvatī Bhavana Granthamālā series

I am indebted to my wife Sm. Jharna Chatterjee and my son Sri Kunal Chatterjee who have all along helped me in getting the edition prepared with as much perfection as possible.

I crave the indulgence of scholars for the short-comings and other printing mistakes which could not be avoided in spite of my best efforts.

Varanasi
Śrīkṛṣṇajanmāṣṭmi
31. 8. 1972

Asoke Chattejee Śāstri
Department of Purāṇa
and History

# कल्किपुराणम्

## प्रथमोऽध्यायः

सेन्द्रा देवगणा मुनीश्वरजना लोकाः [1]सपालाः सदा
[2]आत्मकर्मसुसिद्धये प्रतिदिनं भक्त्या भजन्त्युत्तमाः ।
तं विघ्नेशमनन्तमच्युतमजं [3]सर्वज्ञसर्वाश्रयं
वन्दे वैदिकतान्त्रिकादिविविधैः शास्त्रैः पुरोवन्दितम् ॥ १ ॥
[4]नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥ २ ॥
यद्दोर्दण्डकरालसर्पकवलज्वालाज्वलद्विग्रहा
[5]जग्मुः सत्करवालदण्डदलिता भूपाः [6]क्षितिक्षोभकाः ।
शश्वत् सैन्धववाहनो द्विजजनिः कल्किः [7]परात्मा हरिः
[8]पायात् सत्ययुगादिकृत् स भगवान् धर्मप्रवृत्तिप्रियः ॥ ३ ॥
[9]सर्वं [10]सूतवचः श्रुत्वा नैमिषारण्यवासिनः ।
शौनकाद्या महाभागाः पप्रच्छुस्तं कथामिमाम् ॥ ४ ॥
हे सूत सर्वधर्मज्ञ लोमहर्षणपुत्रक ।
[11]त्रिकालज्ञ [12]पुराणज्ञ वद भागवतीं [13]कथाम् ॥ ५ ॥

---

१. ख स्वतन्त्राः
२. क ख स्व स्वं
३. ग ×
४. ख + ओम्
५. क ख नेशुः
६. ग क्षितिक्रोडकाः
७. ग नित्यं दुःखदा
८. ख पर्याय
९. क + कलिव्यालविषज्वालादग्धं धर्माङ्गसञ्चयम् ।
निरीक्ष्यामृतपूर्णात्मा कल्किः प्रादुर्भविष्यति ॥
१०. क ख इति
११. त्रिकालज्ञा
१२. पुराणज्ञा
१३. ग कलाम् ।

[1]कः कलिः कुत्र वा जातो जगतामीश्वरः प्रभुः ।
कथं वा [2]नित्यधर्मस्य विनाशः कलिना कृतः ॥ ६ ॥
इति [3]तेषां वचः श्रुत्वा सूतो ध्यात्वा हरिं प्रभुम् ।
सहर्षपुलकोद्भिन्नसर्वाङ्गः प्राह तान् मुनीन् ॥ ७ ॥

## सूत उवाच

शृणुध्वमिदमाख्यानं भविष्यं परमाद्भुतम् ।
[4]कथितं ब्रह्मणा पूर्वं नारदाय [5]विपृच्छते ॥ ८ ॥
नारदः प्राह मुनये व्यासायामिततेजसे ।
[6]स व्यासो तिजपुत्राय [7]ब्रह्मभावाय धीमते ॥ ९ ॥
स चाभिमन्युपुत्राय विष्णुराताय संसदि ।
प्राह भागवतान् धर्मानष्टादशसहस्रकान् ॥ १० ॥
तदा नृपे लयं प्राप्ते समाहे [8]प्रश्नशेषितम् ।
मार्कण्डेयादिभिः पृष्ठः प्राह पुण्याश्रमे शुकः ॥ ११ ॥
तत्राहं तदनुज्ञातः श्रुतवानस्मि याः कथाः ।
[9]भविष्याः [10]कथयामीह पुण्या भागवतीः शुभाः ॥ १२ ॥
ताः शृणुध्वं महाभागाः समाहितधियोऽनिशम् ।
गते कृष्णे स्वनिलयं प्रादुर्भूतो यथा कलिः ॥ १३ ॥
प्रलयान्ते जगत्स्रष्टा ब्रह्मा लोकपितामहः ।
ससर्ज [11]घोरं मलिनं पृष्ठदेशात् स्वपातकम् ॥ १४ ॥

---

१. क स कल्किः, ख कः कल्किः
२. ग सत्यधर्मस्य
३. ख तत्तु
४. ग उक्तं च
५. ख च संसदि
६. स चापि
७. क ब्रह्मरताय, ग ब्रह्मराताय
८. क प्रश्नशेषितान्, ख प्रश्नभाषितम्
९. ख भविष्यः
१०. क कथयामास
११. क मलिनं घोरं



[1]स चाधर्म इति ख्यातस्तस्य वंशानुकीर्त्तनात् ।
[2]श्रवणात् स्मरणाल्लोकः सर्वपापैः [3]प्रमुच्यते ॥ १५ ॥
अधर्मस्य प्रिया [4]रम्या मिथ्या मार्जारलोचना ।
तस्य पुत्रोऽतितेजस्वी दम्भः परमकोपनः ॥ १६ ॥
[5]स मायायां भगिन्यान्तु लोभं पुत्रञ्च कन्यकाम् ।
निकृतिं जनयामास तयोः क्रोधः [6]सुतोऽभवत् ॥ १७ ॥
स हिंसायां भगिन्यान्तु जनयामास तं कलिम् ।
वामहस्तधृतोपस्थं तैलाभ्यक्ताञ्जनप्रभम् ॥ १८ ॥
[7]काकोदरं करालास्यं लोलजिह्वं भयानकम् ।
[8]पूतिगन्धं द्यूतमद्यस्त्रीसुवर्ण[9]कृताश्रयम् ॥ १९ ॥
भगिन्यान्तु दुरुक्त्यां [10]स भयं पुत्रञ्च कन्यकाम् ।
मृत्युं स जनयामास तयोश्च [11]निरयोऽभवत् ॥ २० ॥
यातनायां [12]भगिन्यान्तु लेभे पुत्रायुतायुतम् ।
इत्थं कलिकुले जाता बहवो [13]धर्मनिन्दकाः ॥ २१ ॥
[14]यज्ञाध्ययनदानादिवेदतन्त्र[15]विनाशकाः ।
[16]आधिव्याधिजराग्लानिदुःख[17]शोकभयाश्रयाः ॥ २२ ॥
कलिराजानुगाश्चेरु[18]र्यूथशो लोकनाशकाः ।
बभूवुः कालविभ्रष्टाः क्षणिकाः कामुका नराः ॥ २३ ॥

---

१. ख अधर्मस्तस्य नाम स्यात् विख्यातं वंशकीर्त्तनम्
२. ग स्मरणात् श्रवणात्
३. ग विमुच्यते
४. ग चार्वी
५. सभार्यायाम्
६. क सुतो भवेत्, ग सुतश्चाभूत्
७. क कालोदरम्
८. क पूतिगन्धद्युमद्यस्त्रीसुवर्णस्य प्रियाश्रयम्
९. ख प्रियाश्रयम्
१०. ग हि
११. क निरयो भवेत्
१२. ख भगिन्यां च
१३. ख धर्मवञ्चकाः, ग सत्यनिन्दकाः
१४. ग इज्या
१५. ख ग विमर्दकाः
१६. ग शोक
१७. ग ताप
१८. ख यथा गोलोकनाशका

[1]दम्भाचारदुराचारास्तातमातृविहिंसकाः ।
[2]वेदहीना द्विजा दीनाः शूद्रसेवापराः सदा ॥ २४ ॥
कुतर्कवादबहुला धर्मविक्रयिणोऽधमाः ।
वेदविक्रयिणो व्रात्या रसविक्रयिणस्तथा ॥ २५ ॥
मांसविक्रयिणः क्रूराः शिश्नोदरपरायणाः ।
परदाररता मत्ता [3]वर्णसङ्करकारकाः ॥ २६ ॥
ह्रस्वाकाराः पापसाराः शठा मठनिवासिनः ।
[4]षोडशाब्दायुषः श्यालबान्धवा [5]हीनसङ्गमाः ॥ २७ ॥
विवादकलहक्षुब्धाः केशवेशविभूषणाः ।
कलौ कुलीना धनिनः पूज्या [6]वार्द्धुषिका द्विजाः ॥ २८ ॥
[7]सन्न्यासिनो गृहासक्ता गृहस्थास्त्वविवेकिनः ।
[8]गुरुनिन्दापरा धर्मध्वजिनः साधुवञ्चकाः ॥ २९ ॥
[9]प्रतिग्रहरताः शूद्राः [10]परस्वहरणादराः ।
[11]द्वयोः स्वीकारमु[12]द्वाहः [13]शठे मैत्री वदान्यता ॥ ३० ॥
प्रतिदाने क्षमा शक्तौ विरक्तिः करणाक्षमे ।
वाचालत्वञ्च पाण्डित्ये यशोऽर्थे धर्मसेवनम् ॥ ३१ ॥
धनाढ्यत्वञ्च साधुत्वे [14]दूरे नीरे च तीर्थता ।
सूत्रमात्रेण विप्रत्वं दण्डमात्रेण मस्करी ॥ ३२ ॥

१. ख दम्भचोर
२. क ×
३. ख वर्णसङ्करकारिकाः
४. क षोडशाष्टायुषः
५. क ख ग नीचसङ्गमाः
६. क वार्द्धषिका जनाः
७. ख सन्न्यासी च
८. ख ग घ + तर्जयिष्यन्ति पितरः प्रहरिष्यन्ति वै सुताः ।
श्वश्रूं श्वशुरकं वध्वः पतिं स्त्रीजारमाश्रिताः ॥
९. ख ग + कुतर्कसंजल्पमुखा महाहङ्कारमत्सराः
१०. ख ग + समाजेऽधर्मवादिनः
११. ख ग + तपोवेशधराः शूद्राः परस्वहरणादराः
१२. क मुद्वाहे
१३. शास्त्रे मैत्रं वदान्यता, ख शाठ्ये
१४. ख दूरनीरे



अल्पशस्या वसुमती नदीतीरे[1]ऽवरोपिता ।
स्त्रियो [2]वेश्यालापसुखाः स्वपुंसा त्यक्तमानसाः ॥ ३३ ॥
[3]परान्नलोलुपा विप्राश्चण्डाल[4]गृहयाजकाः ।
स्त्रियो वैधव्यहीनाश्च [5]स्वच्छन्दाचरणप्रियाः ॥ ३४ ॥
चित्रवृष्टिकरा मेघा मन्दशस्या च मेदिनी ।
प्रजाभक्षा नृपा लोकाः [6]करपीडाप्रपीडिताः ॥ ३५ ॥
स्कन्धे भारं करे पुत्रं कृत्वा क्षुब्धाः प्रजा जनाः ।
[7]गिरिदुर्गं वनं घोरमाश्रयिष्यन्ति दुर्भगाः ॥ ३६ ॥
मधुमांसैर्मूलफलैराहारैः प्राणधारिणः ।
एवं [8]तु प्रथमे पादे कलेः कृष्णविनिन्दकाः ॥ ३७ ॥
द्वितीये तन्नामहीनास्तृतीये वर्णसङ्कराः ।
[9]एकवर्णाश्चतुर्थे [10]च [11]विस्मृताश्च्युतसत्क्रियाः ॥ ३८ ॥
निःस्वाध्यायस्वधास्वाहावौषडोङ्कारवर्जिताः ।
देवाः [12]सर्वे निराहाराः [13]ब्रह्माणं शरणं ययुः ॥ ३९ ॥
[14]धरित्रीमग्रतः कृत्वा [15]क्षीणां दीनां मनस्विनीम् ।
ददृशुर्ब्रह्मणो लोकं वेद[16]ध्वनिनिनादितम् ॥ ४० ॥
यज्ञधूमैः समाकीर्णं मुनिवर्यनिषेवितम् ।
सुवर्णवेदिकामध्ये दक्षिणावर्त्तमुज्ज्वलम् ॥ ४१ ॥

१. क रेवरोपिता
२. ख वेश्यालापमुखाः
३. ग परान्नपृथुला
४. ख ग गृहपालकाः
५. क स्वच्छन्दाचारिणप्रियाः
६. ख करभार
७. क गिरिदुर्गे
८. क च
९. ख एकवर्णाश्चतुर्वर्णो
१०. क वै
११. ख विस्मिता
१२. ख सर्वे च सगणा
१३. ख ब्राह्मणं
१४. ख पृथिवीम्
१५. क क्षोणीम्
१६. ख ध्वनिभिरावृतम्

वह्नि यूपाङ्कितोद्यान[1]वनपुष्प[2]फलान्वितम् ।
सरोभिः सारसैर्हंसैराह्वयन्तमिवातिथिम् ॥ ४२ ॥
वायुलोलल्लताजालकुसुमालिकुलाकुलैः ।
[3]प्रणामाह्वानसत्कारमधुरालापवीक्षणैः ॥ ४३ ॥
[4]तद् ब्रह्मसदनं देवाः सेश्वराः क्लिन्नमानसाः ।
विविशुस्तदनुज्ञाता निजकार्यं निवेदितुम् ॥ ४४ ॥
त्रिभुवनजनकं सदासनस्थं सनकसनन्दनसनातनै[5]श्च सिद्धैः ।
[6]परिसेवितपादकमलं ब्रह्माणं देवता [7]नेमुः ॥ ४५ ॥

[8]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[9]कल्युत्पत्तिविवरणं[10] नाम प्रथमोऽध्यायः ॥

१. क फल २. ख फलावृतम्
३. क प्रणवाह्वान, ख प्रणामाकारसाकारमधुराणां परीक्षणैः
४. ख तत् तस्य ५. ख सुसिद्धैः
६. ख परिसेवितं तव पदकमलं ७. ४ क मुने
८. ख × इति श्री ९ ग कलिविवरणं
१०. ग × नाम

# द्वितीयोऽध्यायः

## सूत उवाच

उपविष्टास्ततो देवा ब्रह्मणो वचनात् [1]पुरः ।
कलेर्दोषा[2]द्धर्महानिं कथयामासु[3]रादरात् ॥ १ ॥
देवानां तद्वचः श्रुत्वा ब्रह्मा तानाह दुःखितान् ।
प्रसादयित्वा तं [4]विष्णुं साधयिष्याम्यभीप्सितम् ॥ २ ॥
[5]इति देवैः परिवृतो गत्वा गोलोकवासिनम् ।
स्तुत्वा प्राह पुरो ब्रह्मा देवानां हृदयेप्सितम् ॥ ३ ॥
[6]निशम्य पुण्डरीकाक्षो ब्रह्माणमिदमब्रवीत् ।
[7]शम्भले विष्णुयशसो [8]गृहे प्रादुर्भवाम्यहम् ॥ ४ ॥
सुमत्यां मातरि [9]विभो कन्यायां [10]त्वन्निदेशतः ।
चतुर्भिर्भ्रातृभिर्देव करिष्यामि [11]कलिक्षयम् ॥ ५ ॥
भवन्तो [12]बान्धवा देवाः स्वांशेनावतरिष्यथ ।
इयं मम प्रिया लक्ष्मीः सिंहले संभविष्यति ॥ ६ ॥
बृहद्रथस्य [13]भूपस्य [14]कौमुद्यां [15]च शुभानना ।
भार्यायां मम भार्य्यैषा पद्मानाम्नी [16]भविष्यति ॥ ७ ॥

१. क पुनः २. ख ग धर्मनाशं
३. क राकुलाः ४. ख ग देवं
५. ग सह ६. क ख घ तच्छ्रुत्वा
७. ख सम्भलो ८. क गेहे
९. ख विभोः १०. ग च त्वदाज्ञया
११. ख ग कलेः क्षयम् १२. ग सह मित्रैश्च
१३. क भुग्नस्य १४. क कौमुदी
१५. घ कमलेक्षणा १६. घ जनिष्यति

यात यूयं भुवं देवाः स्वांशावतरणे रताः ।
राजानौ मरुदेवापी [1]स्थापयिष्याम्यहं भुवि ॥ ८ ॥

[2]पुनः कृतयुगं कृत्वा धर्मान् संस्थाप्य [3]पूर्ववत् ।
[4]घोरं कलिं संनिरस्य प्रयास्ये [5]स्वालयं विभो ॥ ९ ॥

इत्युदीरितमाकर्ण्य ब्रह्मा देवगणैर्वृतः ।
जगाम ब्रह्मसदनं देवाश्च [6]स्वालयं ययुः ॥ १० ॥

महिमां स्वस्य भगवान्निजजन्मकृतोद्यमः ।
[7]विप्रर्षे शम्भलग्राममाविवेश परात्मकः ॥ ११ ॥

सुमत्यां विष्णुयशसा गर्भमाधत्त वैष्णवम् ।
[8]ग्रहनक्षत्रराश्यादिसेवितश्रीपदाम्बुजम् ॥ १२ ॥

सरित्समुद्रा गिरयो लोकाः [9]सस्थाणुजङ्गमाः ।
[10]सहर्षा ऋषयो देवा जाते विष्णौ जगत्पतौ ॥ १३ ॥

बभूवुः सर्वसत्त्वानामानन्दा विविधाश्रयाः ।
नृत्यन्ति पितरो हृष्टास्तुष्टा देवा जगुर्यशः ।
चक्रुर्वाद्यानि गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १४ ॥

---

१. ग भूतले स्थापयाम्यहम्
२. ख × पुनः··· ···विभो; ग कृतयुगे तु सम्प्राप्ते; क कृतयुगे समायाते
३. ख यथावत्; ग विधिवत्
४. घ. कलिव्यालं
५. ख स्वनिकेतनम्
६. घ त्रिदिवं
७. क सम्भलग्रामविप्रर्षि
८. क +
सा पूर्णगर्भा सुषुवे पुत्रं श्रीवत्सलाञ्छनम् ॥
श्यामं कमलपत्राक्षं दीर्घचारुचतुर्भुजम् ।
सर्वलक्षणसम्पन्नं विद्योतितगृहान्तरम् ॥
९. ग स्थावरजङ्गमाः
१०. ख ग सर्वे प्रमुदिता जाता



द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवः ।
[1]जातं ददृशतुः पुत्रं पितरौ [2]हृष्टमानसौ ॥ १५ ॥
धातृमाता महाषष्ठी नाभिच्छेत्री तदम्बिका ।
[3]गङ्गादेवी क्लेदमोक्षा सावित्री मार्जनोद्यता ॥ १६ ॥
तस्य विष्णोरनन्तस्य [4]वसुधादात् पयः सुधाम् ।
मातृका [5]मङ्गलवचः कृष्णजन्मदिने [6]तथा ॥ १७ ॥
ब्रह्मा तदुपधार्याशु स्वाशुगं प्राह सेवकम् ।
[7]याहीति सूतिकागारे गत्वा [8]विष्णुं प्रबोधय ॥ १८ ॥
[9]चतुर्भुजमिदं रूपं [10]देवानामपि दुर्लभम् ।
त्यक्त्वा मानुषवद्रूपं [11]कुरु नाथ विचारितम् ॥ १९ ॥
[12]वचांसि ब्रह्मणः श्रुत्वा पवनः [13]सुरभिः सुखम् ।
[14]तमजं प्राह तद्वाक्यं ब्रह्मणो वचनादृतः ॥ २० ॥
तच्छ्रुत्वा पुण्डरीकाक्षस्तत्क्षणाद् द्विभुजोऽभवत् ।
तदा तत्पितरौ दृष्ट्वा विस्मयापन्नमानसौ ।
[15]भ्रमसंस्कारवत्तत्र मेनाते तस्य मायया ॥ २१ ॥

---

१ क +
हस्तभे हर्षणे योगे करणे बालवाह्वये ॥
मीनेऽङ्गे मेषगे सूर्ये चन्द्रे पापेन राशिगे ।
भौमे मकरगे गोस्थे विदि जीवे कुलीरगे ॥
धिष्णे मीनगते मन्दे शुक्रस्थे वर्गसत्तमे ।
जीवपक्षे स्वरे राहौ नृयुग्मे धनुषि ध्वजे ।
वर्गोत्तमे तनौ शुद्धे षड्वर्गस्थखगव्रजे ॥
२ क हर्षमानसौ
३. ख सर्वपापप्रणाशिनी; क घ गङ्गोदक
४. क वसुधायाःपयः सुधाम्; ख वसुधादात् पयः शुभाम्
५. घ माङ्गल्यवचः
६. क अभवत्; ख अभवन्
७. ख याहि याहि
८. ग हरिं
९. ख चातुर्भुजमिदं
१०. ख देवानामपि; ग देवानां दुर्लभं तथा
११. घ कुरुनाथ
१२. क घ इति ब्रह्मवचः
१३. क सौरभः
१४. क ग घ संशीतः
१५. क जन्म

ततस्तु [1]शम्भलग्रामे [2]सोत्सवा जीवजातयः ।
मङ्गलाचारबहुलाः [3]पापतापविवर्जिताः ॥ २२ ॥

सुमतिस्तं सुतं लब्ध्वा विष्णुं [4]जिष्णुं जगत्पतिम् ।
पूर्णकामा विप्रमुख्यानाहूयादाद् गवां [5]शतम् ॥ २३ ॥

हरेः कल्याणकृद्विष्णुयशाः शुद्धेन चेतसा ।
[6]सामर्ग्यजुर्विद्भिरग्र्यैस्तन्नामकरणे रतः ॥ २४ ॥

तदा रामः कृपो व्यासो द्रौणिर्भिक्षुशरीरिणः ।
समायाता [7]हरिं द्रष्टुं बालकत्वमुपागतम् ॥ २५ ॥

तानागतान् समालोक्य चतुरः सूर्यसन्निभान् ।
हृष्टरोमा द्विजवरः पूजयाञ्चक्र ईश्वरान् ॥ २६ ॥

पूजिता[9]स्ते स्वासनेषु [8]संविष्टाः [10]सुसुखाश्रयाः ।
हरिं क्रोडगतं तस्य ददृशुः सर्वमूर्तयः ॥ २७ ॥

तं बालकं नराकारं विष्णुं नत्वा मुनीश्वराः ।
कल्किं कल्कविनाशार्थमाविर्भूतं विदुर्बुधाः ॥ २८ ॥

[11]नामाकुर्वंस्ततस्तस्य कल्किरित्यभिविश्रुतम् ।
[12]कृत्वा संस्कारकर्माणि ययुस्ते हृष्टमानसाः ॥ २९ ॥

१. ख घ सम्मलग्रामे
२. क याः सदा
३. ग पापैश्च परिवर्जिताः
४. ख जिष्णुजगत्प्रभुम
५. क बहु
६. ख मास (?) ऋग्यजुर्भिर्विद्भिः
७. ग प्रभुं
८. स्तूयमानेषु
९. ग संहृष्टाः
१०. घ स्वसुखाश्रयाः
११. ग × नामा……मानसाः
१२. ख चान्ते संस्कारकर्मणः



[1]ततः स ववृधे तत्र सुमत्या परिपालितः ।
कालेनाल्पेन कंसारिः शुक्लपक्षे [2]यथा शशी ॥ ३० ॥

कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः ।
[3]पितृमातृप्रिये रताः गुरुविप्रप्रतिष्ठिताः ॥ ३१ ॥

[4]कल्केरंशाः पुरो जाताः साधवो धर्मतत्पराः ।
गार्ग्यभर्ग्यविशालाद्या [5]ज्ञातयस्तदनुव्रताः ॥ ३२ ॥

विशाखयूपभूपालपालितास्तापवर्जिताः ।
[6]विप्राश्च कल्कि[7]मालोक्य परां प्रीतिमुपागताः ॥ ३३ ॥

ततो विष्णुयशाः पुत्रं [8]धीरं सर्वगुणाकरम् ।
[9]कल्किं कमलपत्राक्षं प्रोवाच पठनादृतम् ॥ ३४ ॥

तात ते ब्रह्मसंस्कारं यज्ञसूत्रमनुत्तमम् ।
सावित्रीं वाचयिष्यामि ततो वेदान् पठिष्यसि ॥ ३५ ॥

## कल्किरुवाच

को वेदः का च सावित्री केन सूत्रेण संस्कृताः ।
ब्राह्मणा विदिता लोके तत् तत्त्वं वद तात माम् ॥ ३६ ॥

१. क + कलि पापाशयं विद्यात्तच्छुष्यति यत इतः ।
तस्मात् कल्किरिति ख्यातः कल्कीत्यपि च साम्प्रतम् ॥
जन्म नाम तु तस्यासीत् पुरुषोत्तम इत्यपि ।
पूर्णं ब्रह्म परं ब्रह्म परमात्मा परात्परः ॥
कल्पान्तरे जन्म चास्य माघशुक्लशिवातिथौ ।
कपक्षे नक्रभे वक्रे रवौ चन्द्रे वृषस्थिते ॥
भौमे वृश्चिकगे सौम्ये तौक्षिके कर्कटे गुरौ ।
भृगौ मीने शनौ जूके नमराश्यपितृयुग्मगे ॥
२. ग शशी इव
३. क घ पितृमातृप्रियकराः; ग निरता पितृहितेषु
४. ख कल्केरेते
५. ग जातय
६. घ ब्राह्मणा
७. क मारोप्य
८. ख ग चिरं सर्वगुणालयम्
९. क कल्किमीन्दिवरश्याम

### पितोवाच

वेदो हरेर्वाक् सावित्री वेदमाता [1]गुणान्विता।
त्रिगुणश्च त्रिवृत्सूत्रं तेन विप्राः प्रतिष्ठिताः ॥ ३७ ॥
दशयज्ञैः संस्कृता ये [2]ब्राह्मणा ब्रह्मवादिनः।
तत्र [3]वेदाश्च लोकानां त्रयाणामिह [4]पोषकाः ॥ ३८ ॥
यज्ञाध्ययनदानादि तपः स्वाध्यायसंयमः।
प्रीणयन्ति हरिं भक्त्या [5]वेदमन्त्रविधानतः ॥ ३९ ॥
तस्माद्यथोपनयनकर्मणाहं द्विजैः सह।
संस्कर्तुं [6]मित्रबान्धवैस्त्वामिच्छामि शुभे दिने ॥ ४० ॥

### पुत्र उवाच

के च ते दशसंस्कारा ब्राह्मणेषु [7]प्रतिष्ठिताः।
[8]ब्राह्मणाः केन वा विष्णुमर्चयन्ति विधानतः ॥४१॥

### [9]पितोवाच

[10]ब्राह्मण्यां [11]ब्राह्मणाद् जातो गर्भाधानादिसंस्कृतः।
सन्ध्यात्रयेण सावित्रीपूजाजपपरायणः ॥४२॥
तपस्वी सत्यवाग् धीरो धर्मात्मा [12]त्राति संसृतिम्।
[13]विष्णवर्चनमिदं ज्ञात्वा सदानन्दमयो द्विजः ॥४३॥

### पुत्र उवाच

कुत्रास्ते स द्विजो येन तारयत्यखिलं जगत्।
सन्मार्गेण हरिं प्रीणन् कामदोग्धा जगत्त्रये ॥४४॥

---

१. घ प्रतिष्ठिता
२. ख ब्रह्मणो वेदवादिनः
३. ख वेदाद्यलोकानां
४. ग पालकाः
५. घ वेदतन्त्र; ख वेदमन्त्रपरायणैः
६. क ग घ बान्धवजनैः
७. ग विशेषिताः
८. ख द्विजाश्च केन मन्त्रेण विधिवद्यर्चयन्ति
९. ग ×
१०. ख ब्रह्मण्यां
११. क ब्राह्मणो जातो
१२. क तात संसृतिः
१३. ख विष्णोर्वाक्यमिदं



### पितोवाच

कलिना बलिना धर्म[1]घातिना द्विज[2]पातिना।
[3]निराकृता धर्मरता गता वर्षान्तरान्तरम् ॥४५॥
ये स्वल्पतपसो विप्राः स्थिताः कलियुगान्तरे।
शिश्नोदर[4]भृतोऽधर्मनिरता विरतक्रियाः ॥४६॥
पापसाराः दुराचारास्तेजोहीनाः कलाविह।
[5]आत्मानं रक्षितुं नैव शक्ताः शूद्रस्य सेवकाः ॥४७॥

[6]इति जनकवचो निशम्य कल्किः [7]कलिकुलनाशमनोऽभिलाषजन्मा।
द्विजनिजवचनैस्तदोपनीतो गुरुकुलवासमुवास साधुनाथः ॥४८॥

[8]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये कल्किजन्मोपनयनं [9]नाम द्वितीयोऽध्यायः[10]

---

१. क पतिना
२. क घातिना
३. ग समाच्छन्ना
४. ख भूतो
५. क स्वात्मानम्; ख × आत्मानं ...... सेवका:
६. क + सूतोवाच
७. ग ×
८. क × इति श्री
९. ग × नाम
१०. ग + समाप्तः

# तृतीयोऽध्यायः

ततो [1]वस्तुं गुरुकुले यान्तं कल्किं निरीक्ष्य सः।
महेन्द्राद्रिस्थितो रामः समानीयाश्रमं प्रभुः ॥१॥
[2]प्राह त्वां पाठयिष्यामि गुरुं मां विद्धि धर्मतः।
भृगुवंशसमुत्पन्नं [3]जामदग्न्यं महाप्रभुम् ॥२॥
वेदवेदाङ्गतत्त्वज्ञं [4]धनुर्वेदविशारदम्।
[5]कृत्वा निःक्षत्रियां पृथ्वीं दत्त्वा विप्राय दक्षिणाम् ॥३॥
महेन्द्राद्रौ [6]तपस्तप्तुमागतोऽहं द्विजात्मज।
[7]त्वं पठात्र निजं वेदं यच्चान्यच्छास्त्रमुत्तमम् ॥४॥
इति [8]तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः।
कल्किः पुरो नमस्कृत्य वेदाधीती ततोऽभवत् ॥५॥
साङ्गं चतुःषष्टिकलं [9]धनुर्वेदादिकञ्च यत्।
[10]समधीत्य जामदग्न्यात् कल्किः प्राह कृताञ्जलिः ॥६॥
[11]दक्षिणां प्रार्थय विभो या देया तव सन्निधौ।
यया मे सर्वसिद्धिः स्याद् वा [12]स्यात् त्वत्तोषकारिणी ॥७॥

## [13]राम उवाच

ब्रह्मणा प्रार्थितो [14]भूमन् कलिनिग्रहकारणात्।
विष्णुः सर्वाश्रयः पूर्णः स जातः [15]शम्भले भवान् ॥८॥

---

१. क दम्भम्; ख विष्णुः
२. ग पाठयिष्याम्यहं तुभ्यम्
३. क जामदग्निम्
४. ख ग धनुर्विद्या
५. क × कृत्वा…द्विजात्मज
६. ख तपः कर्तुम्
७. ग घ स्वं
८. क घ तद्वच आश्रुत्य
९. ख ग धनुर्विद्या
१०. ग जामदग्न्यात् पठित्वा च
११. ख + कल्किरुवाच
१२. ग सन्तोष
१३. ग ×
१४. क ब्रह्मन्
१५. ख सम्भले



मत्तो [1]विद्यां शिवादस्त्रं लब्ध्वा वेदमयं [2]शुकम्।
सिंहले च [3]प्रियां पद्मां धर्मान् संस्थापयिष्यसि ॥९॥
ततो दिग्विजये [4]भूपान् धर्महीनान् कलिप्रियान्।
निगृह्य बौद्धान् देवापिं मरुञ्च स्थापयिष्यसि ॥१०॥
वयमेतैस्तु सन्तुष्टाः [5]साधुकृत्यैः सदक्षिणाः।
यज्ञं दानं तपः कर्म करिष्यामो [6]यथोचितम् ॥११॥
इत्येतद् वचनं श्रुत्वा नमस्कृत्य [7]महामुनिम्।
बिल्वोदकेश्वरं देवं गत्वा तुष्टाव [8]शङ्करम् ॥१२॥
पूजयित्वा यथान्यायं शिवं शान्तं महेश्वरम्।
प्रणिपत्याशुतोषं तं ध्यात्वा प्राह हृदि स्थितम् ॥१३॥

## कल्किरुवाच

गौरीनाथं विश्वनाथं शरण्यं भूतावासं वासुकीकण्ठभूषम्।
[9]त्र्यक्षं पञ्चास्यादिदेवं पुराणं वन्दे सान्द्रानन्दसन्दोहदक्षम् ॥१४॥

---

१. क दिव्यम्
२. ग प्रभुम्
३. ख प्रियाभार्यां; ग प्रियां भार्यां
४. ग सर्वान्
५. ख ग भूरिकार्यैः
६. ख यथेप्सितम्
७. क घ मुनिं गुरुम्
८. घ + योगाधीशं कामनाशं करालं गङ्गासङ्गाक्लिन्नमूर्द्धानमीशम्।
जटाजूटाटोपरिक्षिप्तभावं महाकालं चन्द्रभालं नमामि ॥
श्मशानस्थं भूतवेतालसङ्गं नानाशस्त्रैः खड्गशूलादिभिश्च।
व्यग्रात्युग्रा बाहवो लोकनाशे यस्य क्रोधोद्धूतलोकोऽस्तमेति ॥
यो भूतादिपञ्चभूतैः सिसृक्षुः तन्मात्रात्मा कालकर्मस्वभावैः।
प्रहृत्येदं प्राप्य जीवत्वमीशो ब्रह्मानन्दो रमते तं नमामि ॥
स्थितो विष्णुः सर्वजिष्णुः सुरात्मा लोकान् साधून् धर्मसेतून् बिभर्ति।
ब्रह्माद्यांशे योऽभिमानी गुणात्मा शब्दाद्यङ्गैस्तं परेशं नमामि ॥
यस्याज्ञया वायवो वान्ति लोके ज्वलत्यग्निः सविता याति तप्यन्।
शीतांशुः खे तारकैः सग्रहैश्च प्रवर्त्तते तं परेशं प्रपद्ये ॥
यस्याश्वासात् सर्वधात्री धरित्री देवो वर्षत्यम्बु कालप्रमाता।
मेरुर्मध्ये भुवनानाञ्च भर्त्ता तमीशानं विश्वरूपं नमामि ॥

[1]ततः प्रीतः शिवः प्रादात् कल्कये कलिनाशिने ।
हयरत्नं देवरत्नं वाहनार्थं मनोजवम् ।
असिरत्नं तथा म्लेच्छकलेवरस्कन्धकर्तनम् ॥१५॥
इति [2]रत्नं शिवाल्लब्ध्वा नमस्कृत्य महेश्वरम् ।
[3]शम्भलग्राममगमत् तुरङ्गेण त्वरान्वितः ॥१६॥
पितरं मातरं भ्रातॄन् नमस्कृत्य यथाविधि ।
सर्वं [4]तद्वर्णयामास जामदग्न्यस्य [5]भाषितम् ॥१७॥
शिवस्य वरदानञ्च [6]कथयित्वा [7]शुभङ्कराः ।
कल्किः परमतेजस्वी ज्ञातिभ्योऽभ्यवदन् मुदा ॥१८॥
[8]गार्ग्यभर्ग्यविशालाद्यास्तच्छ्रुत्वा नन्दिताः स्थिताः ।
कथोपकथनं जातं [9]शम्भलग्रामवासिनाम् ॥१९॥

---

इति कल्किस्तवं श्रुत्वा शिवं सर्वात्मदर्शनः ।
साक्षात् प्राह हसन्नीशः पार्वतीसहितोऽमलः ॥
कल्केः संस्पृश्य हस्तेन समस्तावयवं मुदा ।
तमाह वरय प्रेष्ठ वरं यत्तेऽभिकाङ्क्षितम् ॥
त्वया कृतमिदं स्तोत्रं ये पठन्ति जना भुवि ।
तेषां सर्वार्थसिद्धिः स्यादिहलोके परत्र च ॥
विद्यार्थी चाप्नुयाद्विद्यां धर्मार्थी धर्ममाप्नुयात् ।
कामानवाप्नुयात् कामी पठनाच्छ्रवणादपि ॥
त्वं गारुडमिदं चाश्वं कामगं बहुरूपिणम् ।
शुकमेनञ्च सर्वज्ञं मया दत्तं गृहाण भोः ॥
सर्वशास्त्रास्त्रविद्वांसं सर्ववेदार्थपारगम् ।
जयिनं सर्वभूतानां त्वां वदिष्यन्ति मानवाः ॥
रत्नत्सरुं करालञ्च करवालं महाप्रभम् ।
गृहाण गुरुभारायाः पृथिव्या भारसाधनम् ॥

१. घ × ततः······कर्तनम्
२. ग वचनं श्रुत्वा
३. ख सम्मले
४. ख तत् कथयामास; ग विवृतवान् नूनं
५. क ईरितम्; ग भाषणम्
६. ग वाचयित्वा
७. क घ शुभाः कथाः
८. क भृगु
९. ख सम्मल



विशाखयूपभूपालः [1]श्रुत्वा तेषां च [2]भाषणम् ।
प्रादुर्भावं हरेर्मेने कलिनिग्रह[3]कारणम् ॥ २० ॥
[4]राजधान्यां [5]निजपुरे [6]दानयज्ञतपोव्रतान् ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रानपि [7]हरिप्रियान् ॥ २१ ॥
स्वधर्मनिरतान् [8]ज्ञात्वा [9]धार्मिकोऽभूत् [10]स्वयं नृपः ।
[11]प्रजापालकशुद्धात्मा प्रादुर्भावात् श्रियः पतेः ॥ २२ ॥
[12]अधर्मवंशजाः सर्वे दृष्ट्वा [13]तान् धार्मिकान् जनान् ।
लोभानृतादयो जग्मुस्तद्देशाद् दुःखिता [14]द्रुतम् ॥ २३ ॥
[15]कल्किस्तुरगमारुह्य खड्गं च विमलप्रभम् ।
दंशितः सशरं चापं गृहीत्वागात् पुराद् वहिः ॥ २४ ॥
विशाखयूपभूपालः [16]प्रागात् साधुजनप्रियः ।
कल्किं द्रष्टुं हरेरंशमाविर्भूतश्च [17]शम्भले ॥ २५ ॥
कविं प्राज्ञं सुमन्तुश्च पुरस्कृत्य [18]महाप्रभम् ।
गार्ग्य[19]भर्ग्यविशालैश्च ज्ञातिभिः [20]परिवारितम् ॥ २६ ॥
विशाखयूपो ददृशे चन्द्रं तारागणैरिव ।
पुराद् वहिः सुरैर्यद्वदिन्द्रमुच्चैःश्रवः स्थितम् ॥ २७ ॥

१. ख आनिशम्य
२. घ भाषितम्
३. क घ कारकम्
४. ख घ माहिष्मत्यां
५. ख निजालये, ग स्वके गेहे
६. घ यागदान
७. ख ग घ हरेः प्रियान्
८. ग घ दृष्ट्वा
९. घ धर्मिष्ठोऽभूत्
१०. ग घ नृपः स्वयम्
११. घ प्रजापालः शुद्धमनाः
१२. घ अधर्मवंश्यांस्तान्
१३. ख घ जनान्
१४. क रिपुः, घ भयम्
१५. ख ध जैत्रं
१६. घ प्रायात्
१७. ख सम्मले
१८. ख महाप्रभुम्
१९. ख भार्ग्य
२०. ग परिनिष्ठितम्

विशाखयूपोऽवनतः संप्रहृष्टतनूरुहः ।
कल्केरालोकनात् सद्यः [1]पूर्णात्मा वैष्णवोऽभवत् ॥ २८ ॥
[2]सह राज्ञा वसन् कल्किः धर्मानाह पुरोदितान् ।
ब्राह्मण[3]क्षत्रियविशामाश्रमाणां समासतः ॥ २९ ॥
ममांशान् कलिविभ्रष्टानिति मज्जन्मसङ्गतान् ।
राजसूयाश्वमेधाभ्यां मां यजस्व [4]यथोचितम् ॥ ३० ॥
[5]अहमेव परो लोके धर्मश्चाहं सनातनः ।
कालस्वभावसंस्काराः कर्मानुगतयो मम ॥ ३१ ॥
[6]सोमसूर्यकुले जातौ देवापिमरुसंज्ञकौ ।
स्थापयित्वा कृतयुगं [7]कृत्वा यास्यामि सद्गतिम् ॥ ३२ ॥
इति तद्वचनं श्रुत्वा राजा कल्किं हरिं प्रभुम् ।
प्रणम्य प्राह सद्धर्मान् वैष्णवान् मनसेप्सितान् ॥ ३३ ॥
इति नृपवचनं निशम्य कल्किः कलिकुलनाशनवासनावतारः ।
[8]निजजनपरिषद्विनोदकारी मधुरवचोभिराह साधुधर्मान् ॥३४॥

[8]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
कल्किवर[9]लाभो नाम तृतीयोऽध्यायः[10] ॥

१. ख ग पुण्यात्मा
२. ख तेन
३. क वैश्यशूद्राणाम्
४. घ समाहितम्
५. घ अयमेव
६. ग सोमसूर्यकुलोत्पन्नौ
७. ख ग मुक्तिं यास्यामि वै ध्रुवम्
८. क ×इति श्री
९. ग ×नाम
१०. ग +समाप्तः

# चतुर्थोऽध्यायः

## सूत उवाच

ततः कल्किः सभामध्ये [1]राजमानो रविर्यथा ।
बभाषे तं नृपं [2]धर्मान् मायाधर्मान् द्विजप्रियान् ॥ १ ॥

## [3]कल्किरुवाच

कालेन ब्रह्मणो नाशे प्रलये मयि [4]सङ्गते ।
अहमेवासमेवाग्रे नान्यत् कार्यमिदं मम ॥ २ ॥
प्रसुप्तलोकतन्त्रस्य द्वैतहीनस्य चात्मनः ।
महानिशान्ते रन्तुं मे समुद्भूतो विराट् प्रभुः ॥ ३ ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
तदङ्गजोऽभवद् ब्रह्मा वेदवक्त्रो महाप्रभुः ॥ ४ ॥
[5]जीवोपाधेर्ममांशाच्च प्रकृत्या मायया [6]स्वया ।
ब्रह्मोपाधिः स सर्वज्ञो मम वाग्वेदशासितः ॥ ५ ॥
संसर्ज जीवजातानि [7]कालमायांशयोगतः ।
देवा मन्वादयो लोकाः सप्रजापतयः [8]प्रभुः ॥ ६ ॥
गुणिन्या मायया अंशा मे [9]नानोपाधौ ससर्जिरे ।
सोपाधय इमे लोका देवाः सस्थाणुजङ्गमाः ॥ ७ ॥
ममांशा मायया सृष्टा [10]यतो मय्याविशन् लये ।
एवंविधा [11]ब्राह्मणा ये मच्छरीरा [12]मदात्मिकाः ॥ ८ ॥

१. ख भ्राजमानो
२. घ धर्ममयाधर्मान्
३. ख ग ×
४. क घ सङ्गताः
५. क जीवोयाधर्ममांसाच्च
६. ग तया
७. क ज्ञान
८. क तथा
९. क लीनोपाधौ
१०. ख ह्येते
११. ग ये विप्रा हि
१२. ख मदात्मकाः

[1]मामुद्वहन्ति भुवने यज्ञाध्ययनसत्क्रियाः ।
[2]मां प्रसेवन्ति शंसन्ति तपोदानक्रिया[3]स्विह ॥ ९ ॥
स्मरन्त्यामोदयन्त्येव नान्ये देवादयस्तथा ।
ब्राह्मणा वेदवक्तारो वेदा मे मूर्त्तयः [4]सदा ॥ १० ॥
तस्मादिमे ब्राह्मणजास्तैः [5]पुष्णन्ति जगज्जनाः ।
जगन्तिमे शरीराणि [6]तत्पोषे ब्रह्मणो वरः ॥ ११ ॥
तेनाहं तान्नमस्यामि शुद्धसत्वगुणाश्रयः ।
[7]ततो जगन्मयं पूर्वं मां सेवन्तेऽखिलाश्रयाः ॥ १२ ॥

### [8]राजोवाच

विप्रस्य लक्षणं ब्रूहि त्वद्भक्तिः का च तत्कृता ॥
यतस्तवानुग्रहेण वाग्वाणा [9]ब्राह्मणाः कृताः ॥ १३ ॥

### कल्किरुवाच

[10]वेदा मामीश्वरं प्राहुरव्यक्तं व्यक्तिमत् परम् ।
ते वेदा ब्राह्मणमुखे [11]नानाधर्मे प्रकाशिताः ॥ १४ ॥
यो धर्मो ब्राह्मणानां हि सा भक्तिर्मम पुष्कला ।
[12]तयाहं तोषितः श्रीशः संभवामि युगे युगे ॥ १५ ॥
ऊर्द्ध्वन्तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः ।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः ॥ १६ ॥
त्रिगुणं तत्ग्रन्थि[13]युक्तं वेदप्रवर[14]संमितम् ।
शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥ १७ ॥

१. घ मामुद्वरन्ति
२. ख मदैकशरणा नित्यं
३. क क्रिया सह
४. क घ परा
५. क प्रेषास्ते; घ पुष्टास्त्व
६. ख तत्पोष्टा
७. क अतो
८. घ विशाखयूप
९. ख ब्रह्मणा
१०. ख वेदानामीश्वरं
११. ख नानाधर्मप्रकाशिताः
१२. ग तया सन्तोषितश्चाहं
१३. ख युत
१४. ख संज्ञकम्



यजुर्विदां नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं [1]फलप्रदम् ॥ १८ ॥
मृद्भस्मचन्दनाद्यैस्तु धारयेत् तिलकं द्विजः ।
भाले त्रिपुण्ड्रं कर्माङ्गं केश[2]पर्यन्तमुज्ज्वलम् ॥ १९ ॥
पुण्ड्रमङ्गुलिमानं तु त्रिपुण्ड्रं तत् त्रिधा कृतम् ।
ब्रह्मविष्णुशिवावासं [3]दर्शनात् पापनाशनम् ॥ २० ॥
ब्राह्मणानां करे [4]स्वर्गा [5]वाचि वेदाः [6]पदे हरिः ।
गात्रे तीर्थानि रागाश्च नाडीषु प्रकृतिस्त्रिवृत् ॥ २१ ॥
[7]सावित्री कण्ठकुहरा [8]हृदयं ब्रह्मसंज्ञितम् ।
तेषां स्तनान्तरे धर्मः पृष्ठेऽधर्मः [9]प्रवर्तितः ॥ २२ ॥
[10]भूदेवा ब्राह्मणा राजन् पूज्या वन्द्याः सदुक्तिभिः ।
[11]चतुराश्रम्यकुशला मम धर्मप्रवर्त्तकाः ॥ २३ ॥
[12]बालाश्चापि ज्ञानवृद्धास्तपोवृद्धा [13]मम प्रियाः ।
तेषां वचः पालयितुमवताराः कृता मया ॥ २४ ॥
[14]महाभाग्यं ब्राह्मणानां सर्वपापप्रणाशनम् ।
कलिदोषहरं श्रुत्वा [15]मुच्यते सर्वतो भयात् ॥ २५ ॥
इति [16]कल्किवचः श्रुत्वा कलिदोष[17]प्रनाशनम् ।
[18]प्रणम्य तं शुद्धमनाः प्रययौ वैष्णवाग्रणीः ॥ २६ ॥

१. घ बलप्रदम्
२. ख विस्तृत
३. क ख दर्शनं पापनाशकम्
४. ख स्वर्गाः
५. घ वाचो
६. घ करे
७. ख ब्रह्मसावित्रीकश्चकुहरा
८. क हृदि
९. घ प्रकीर्तितः
१०. ख भूदेवो ब्राह्मणो
११. ख चातुरा
१२. ग बाल्येष्वपि
१३. ख प्रियाः शुभाः
१४. क महाभागा
१५. ख मुच्यते
१६. ख तस्य वचः
१७. घ विनाशनम्
१८. ग शुद्धात्मा स्वगृहं प्राप वैष्णवोत्तमपुङ्गवः

गते राजनि सन्ध्यायां शिवदत्तशुको बुधः ।
चरित्वा कल्किपुरतः स्तुत्वा तं [1]पुरतः स्थितः ॥ २७ ॥
तं शुकं प्राह कल्किस्तु सस्मितं स्तुतिपाठकम् ।
स्वागतं भवता कस्मात् देशात् किं [2]स्वादितं ततः ॥ २८ ॥

[3]शुक उवाच

शृणु नाथ वचो मह्यं कौतूहल[4]समन्वितम् ।
अहं गतश्च जलधेर्मध्ये सिंहलसंज्ञके ॥ २९ ॥
यथावृत्तं द्वीपगतं कथ्यत्र [5]श्रवणप्रियम् ।
बृहद्रथस्य नृपतेः कन्यायाश्चरितामृतम् ॥ ३० ॥
कौमुद्यामिह जातायां जगतां [6]पापनाशनम् ।
[7]चरितं सिंहलद्वीपे चातुर्वर्ण्यजनावृते ॥ ३१ ॥
प्रासाद[8]हर्म्यसदनपुरराजि[9]विराजिते ।
रत्नस्फाटिककुड्यादिस्वलंताभिर्विभूषिते ॥ ३२ ॥
[10]भृङ्गरङ्गप्रसङ्गाढ्ये पद्मैः कह्लार[11]कुन्दकैः ।
[12]नीलाम्बुजलताजालवनोपवनमण्डिते ॥ ३३ ॥
देशे बृहद्रथो राजा महाबलपराक्रमः ।
तस्य पद्मावती कन्या धन्या रेजे यशस्विनी ॥ ३४ ॥
भुवने दुर्लभा लोकेऽप्रतिमा [13]वरवर्णिनी ।
काममोहकरी चारुचरित्रा चित्रनिर्मिता ॥ ३५ ॥

१. क पुरतस्त विनयान्वितः
२. क स्यादितं
३. घ ×
४. घ समन्वितम्
५. ख ग श्रवणे प्रियम्
६. ख पापनाशिनी
७. ख × चरितं ...... विभूषिते
८. ग रम्य
९. ग विमण्डिते
१०. घ + स्त्रीभिरुत्तमवेशाभिः पद्मिनीभिः समावृते
सरोभिः सारसैर्हंसैरुपकुलजलाकुले
११. क हल्लकैः
१२. घ नानाम्बुज
१३. ख वरवर्तिनी



शिवसेवापरा गौरी यथा [1]पूज्या सुसम्मता ।
सखीभिः कन्यकाभिश्च जपध्यानपरायणा ॥ ३६ ॥
[2]ज्ञात्वा ताश्च हरेर्लक्ष्मीं समुद्भूतां वराङ्गनाम् ।
हरः प्रादुरभूत् साक्षात् पार्वत्या सह हर्षितः ॥ ३७ ॥
सा तमालोक्य वरदं शिवं गौरीसमन्वितम् ।
लज्जिताधोमुखी किञ्चिन्नोवाच पुरतः स्थिता ॥ ३८ ॥
हरस्तामाह सुभगे तव नारायणः पतिः ।
पाणिं ग्रहीष्यति मुदा नान्यो योग्यो नृपात्मजः ॥ ३९ ॥
कामभावेन भुवने ये [3]पश्यन्ति [4]किल स्त्रियः ।
[5]तेनैव वयसा नार्यो भविष्यन्त्यपि तत्क्षणात् ॥ ४० ॥
[6]विना नारायणं देवं त्वत्पाणिग्रहणार्थिनम् ।
गृहं याहि तपस्त्यक्त्वा भोगायतनमुत्तमम् ॥ ४१ ॥
मा क्षोभय हरेः पत्नि कमले विमलं कुरु ।
इति दत्त्वा वरं [7]सोऽयं तत्रैवान्तर्दधे हरः ॥ ४२ ॥
हरवरमिति सा निशम्य पद्मा समुचितमात्ममनोरथप्रकाशम् ।
विकसितवदना प्रणम्य [8]तं हि निजजनकालयमाविवेश रामा ॥४३॥

[9]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
हरवरप्रदानं [10]नाम चतुर्थोऽध्यायः ।

१. क पूज्या
२. घ तां विज्ञाय
३. घ + [illegible]
४. घ मानवाः
५. ख [illegible]
६. क ख +
[illegible] ।
[illegible] ॥
७. [illegible]
८. क घ सोमं
९. क × इति श्री
१०. ग × नाम

# पञ्चमोऽध्यायः

[1]शुक उवाच

एते बहुतिथे काले पद्मां वीक्ष्य बृहद्रथः ।
निरूढयौवनां पुत्रीं विस्मितः पापशङ्कया ॥ १ ॥
कौमुदीं प्राह महिषीं पद्मोद्वाहेऽत्र कं नृपम् ।
वरयिष्यामि [2]सुभगे [3]कुलशीलसमन्वितम् ॥ २ ॥
सा तमाह पतिं देवी शिवेन [4]प्रतिभाषितम् ।
विष्णुरस्याः [5]पतिर्नूनं भविष्यति [6]न संशयः ॥ ३ ॥
इति [7]तस्या वचः श्रुत्वा राजा प्राह कदेति ताम् ।
विष्णुः [8]सर्वगृहावासः पाणिमस्या ग्रहीष्यति ॥ ४ ॥
[9]न मे भाग्योदयः कश्चित् येन [10]जामातरं [11]हरिम् ।
वरयिष्यामि कन्यार्थे वेदवत्या [12]मुनेर्यथा ॥ ५ ॥
इमां स्वयंवरां [13]पद्मां पद्मामिव महोदधेः ।
मथनेऽसुरदेवानां तथा विष्णुर्ग्रहीष्यति ॥ ६ ॥
इति [14]राजगणान् भूपः समाहूय पुरस्कृतान् ।
गुणशीलवयोरूपविद्याद्रविण[15]संवृतान् ॥ ७ ॥

१. क ×
२. ख ग तमत्र
३. ग कुलमाधुर्यमण्डितम्, घ कुलशीलगुणान्वितम्
४. ख च यदीरितम्
५. घ पतिरिति
६. ग न चान्यथा
७. ग तद्वच आकर्ण्य
८. घ सर्वगुहावासः
९. क मम
१०. क जनार्दनं, ख यदुकुलोद्वहम्
११. ग प्रभुम्
१२. ख ग यथा मुनेः
१३. क कन्याम्
१४. घ भूपगणान्
१५. ख सम्मतान्



स्वयंवरार्थं पद्मायाः सिंहले बहुमङ्गले ।
विचार्य कारयामास स्थानं [1]भूपनिवेशनम् ॥ ८ ॥
[2]तत्रायाता नृपाः सर्वे विवाहकृतनिश्चयाः ।
निजसैन्यैः परिवृताः स्वर्णरत्नविभूषिताः ॥ ९ ॥
रथान् गजान[3]श्ववरान् समारूढा महाबलाः ।
श्वेतच्छत्रकृतच्छायाः श्वेतचामरवीजिताः ॥ १० ॥
शस्त्रास्त्रतेजसा दीप्ता देवाः [4]सर्वे बुधोपमाः ।
[5]रुचिराश्वः सुकर्मा च मदिराक्षो [6]दृढाशुगः ॥ ११ ॥
कृष्णसारः पारदश्च जीमूतः [7]क्रूरमर्दनः ।
काशः [8]सुधांशुर्वसुमान् कङ्कः [9]क्रथनसञ्जयौ ॥ १२ ॥
[10]गुरुमित्रः प्रमाथी च [11]विजृम्भः सृञ्जयोऽक्षमः ।
एते चान्ये च बहवः समायाता महाबलाः ॥ १३ ॥
विविशुस्ते रङ्गगताः स्वस्वस्थानेषु पूजिताः ।
वाद्यताण्डव[12]संतुष्टाश्चित्रमाल्याम्बराधराः ॥ १४ ॥
नानाभोग[13]सुखोद्रिक्ताः [14]कामरामा रतिप्रदाः ।
तानालोक्य सिंहलेशः स्वां कन्यां वरवर्णिनीम् ॥ १५ ॥
गौरीं चन्द्राननां श्यामां [15]कृष्णागुरुविभूषिताम् ।
मणिमुक्ताप्रवालैश्च सर्वाङ्गालंकृतां शुभाम् ॥ १६ ॥
किं मायां मोहजननीं किं वा कामप्रियां भुवि ।
[16]रूपलावण्यसम्पन्नां न चान्यामिह दृष्टवान् ॥ १७ ॥

१. ख भूपनिषेवणम्
२. ख ग तत्र याता
३. ख × अश्ववरान्
४. घ सेन्द्रा इवाभवन्
५. घ रुचिराश्वः
६. ख दृढार्गलः
७. ख ग करिमर्दनः
८. ख क्रुशाम्बु, घ कुशाम्बु
९. क क्रथनसम्त्रयौ, ख क्रतुघनञ्जयौ
१०. ख ग गुरुमिश्रः
११. ख जितात्मा
१२. घ संहृष्टा
१३. ग सुखे मग्नाः
१४. ख कामवासा
१५. घ तारहार
१६. ग उपोढरूपलावण्याम्

स्वर्गे क्षितौ वा पातालेऽप्यहं सर्वगो यदि ।
पश्चाद्दासीगणाकीर्णां सखीभिः [1]परिवेष्टिताम् ॥ १८ ॥
दौवारिकैर्वेत्रहस्तैः शासितान्तःपुराद् बहिः ।
[2]पुरोबन्दिगणाकीर्णां प्रापयामास तां शनैः ॥ १९ ॥
नूपुरैः [3]किङ्किणीभिश्च क्वणन्तीं जनमोहिनीम् ।
[4]आगतानां [5]नृपाणां च कुलशीलगुणान् [6]बहून् ॥ २० ॥
शृण्वन्ती हंसगमना रत्नमाला करग्रहा ।
रुचिरापाङ्गभङ्गेन [7]प्रेक्षन्ती लोलकुण्डला ॥ २१ ॥
नृत्यत्कुन्तलसोपानगण्डमण्डलमण्डिता ।
किञ्चित्स्मेरोल्लसद्वक्त्रदशनद्योतदीपिता ॥ २२ ॥
वेदीमध्यारुणक्षौमवसना [8]कोकिलस्वना ।
रूपलावण्यपण्येन [9]क्रेतुकामा जगत्त्रयम् ॥ २३ ॥
[10]पद्मावतीं तां प्रसमीक्ष्य भूपाः संमोहिनीं कामविकृष्ट[11]चित्ताः ।
पेतुः क्षितौ [12]विस्मृतवस्त्रशस्त्राः रथाश्वमातङ्गपवाहनास्ते ॥२४॥
तस्याः स्मरक्षोभनिरीक्षणेन स्त्रियो बभूवुः [13]कमनीयरूपाः ।
बृहन्नितम्बस्तनभारनम्राः सुमध्यमास्तत्स्मृतिजातरूपाः ॥२५॥
विलासहास[14]व्यसनातिचित्राः कान्ताननाः शोणसरोजनेत्राः ।
स्त्रीरूपमात्मानमवेक्ष्य भूपास्तामन्वगच्छन् विशदानुवृत्त्या ॥२६॥
अहं [15]वटस्थोपरिक[16]र्षितात्मा पद्माविवाहोत्सवदर्शनाकुलः ।
तस्या वचोऽन्तर्हृदि दुःखितायाः श्रोतुं स्थितः शोत्स्यमितेषु तेषु ॥२७॥

१. घ परिवारिताम्
२. ख बन्दिमागधसङ्कीर्णाम्
३. ग किङ्किणीजालैः
४. घ स्वागतानां
५. ग नृपां मध्ये
६. ग भृशम्
७. ख ईक्षन्ती
८. ग भृङ्गलोचना
९. ख क्रेतुकामं
१०. ख ग घ समागता
११. ग चेताः
१२. ख विस्मित
१३. ख रमणीयरामाः
१४. ख व्यसनैर्विचित्राः
१५. ग रथस्थो
१६. घ धर्षितात्मा



[1]जानीहि कल्के कमलाविलापं श्रुतं विचित्रं जगतामधीश ।
गते विवाहोत्सवमङ्गले सा शिवं [2]शरण्यं हृदये निधाय ॥२८॥
[3]तान् दृष्ट्वा नृपतीन् गजाश्वरथिभिस्त्यक्तान् सखित्वं गतान्
स्त्रीभावेन समन्वितामनुगतान् पद्मां विलोक्यान्तिके ।
दीना त्यक्तविभूषणा विलिखती पादाङ्गुलैः कामिनी
ईशं कर्तुं निजनाथमीश्वरवचस्त[4]थ्यं हरिं सास्मरत् ॥२९॥

[5]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
पद्मास्वयंवरे नाम[6] पञ्चमोऽध्यायः[7]

१. घ जाहीहि
२. ग प्रशान्तं
३. क तानप्रस्थनृपान्
४. क प्रार्थ्यम्
५. क ×इति श्री
६. ग ×नाम
७. ग +समाप्तः

# षष्ठोऽध्यायः

## शुक उवाच

ततः सा विस्मितमुखी पद्मा [1]निजजनैर्वृता ।
हरिं पतिं [2]हृदि ध्यात्वा प्रोवाच विमलां स्थिताम् ॥ १ ॥

## [3]पद्मोवाच

विमले किं कृतं धात्रा ललाटे [4]लिखनं मम ।
दर्शनादपि [5]लोकानां पुंसां स्त्रीभावकारकम् ॥ २ ॥

ममापि मन्दभाग्यायाः पापिन्याः शिवसेवनम् ।
विफलत्वमनुप्राप्तं वीजमुप्तं [6]यथोषरे ॥ ३ ॥

हरिर्लक्ष्मी[7]पतिः सर्वजगतामधिपः प्रभुः ।
मत्कृतेऽप्यभिलाषं किं करिष्यति जगत्पतिः ॥ ४ ॥

यदि शम्भोर्वचो मिथ्या यदि विष्णुर्न मां [8]स्मरेत् ।
तदाहमनले देहं त्यक्ष्यामि [9]हरिभाविता ॥ ५ ॥

क्व चाहं मानुषी दीना क्वास्ते देवो जनार्दनः ।
[10]कथं तेन विवाहो मे तेजस्तिमिरयोरिव ॥ ६ ॥

[11]निगृहीता विधात्राहं शिवेन परिवञ्चिता ।
विष्णुना च परित्यक्ता मदन्या कात्र जीवति ॥ ७ ॥

---

१. ख स्वात्मजनैः स्थिता २. घ चिन्तयन्ती
३. क ×  ४. ग लिखित्वा
५. ख सर्वेषां ६. घ यथोपरे
७. ग प्रियः ८. ग स्पृशेत्
९. ख ग नात्र संशयः, घ करिमाविता
१०. घ × ११. क+
जरानारदयोर्यद्वहं भावायाः शान्त्वदर्शनम् ।
न तथा मे दृष्टिपथे कृष्णः प्रादुरभूदिह ॥



इति [1]नानाविलापिन्या [2]वचनं शोचनाश्रयम् ।
पद्मायाश्चारुचेष्टायाः श्रुत्वायातस्तवान्तिके ॥ ८ ॥

शुकस्य वचनं श्रुत्वा कल्किः परमविस्मितः ।
तं जगाद पुन[3]र्याहि पद्मां बोधयितुं प्रियाम् ॥ ९ ॥

मत्सन्देशहरो भूत्वा यद्रूपगुणकीर्त्तनम् ।
श्रावयित्वा पुनः [4]कीर समायास्यसि बान्धव ॥ १० ॥

सा मे प्रिया पतिरहं [5]तस्या दैवविनिर्मितः ।
[6]मध्यस्थेन [7]त्वया योगमावयोश्च भविष्यति ॥ ११ ॥

[8]सर्वज्ञोऽसि विधिज्ञोऽसि कालज्ञोऽसि कथामृतैः ।
तामाश्वास्य ममाश्वासकथास्तस्याः समाहर ॥ १२ ॥

इति [9]तस्य वचः श्रुत्वा [10]कीरः परमहर्षितः ।
प्रणम्य तं प्रीतमनाः प्रययौ सिंहलं [11]वरम् ॥ १३ ॥

[12]खगः समुद्रपारेण स्नात्वा पीत्वामृतं पयः ।
[13]वीजपूरफलाहारो [14]गत्वा [15]राजनिकेतनम् ॥ १४ ॥

तत्र कन्यापुरं [16]प्राप्य वृक्षे [17]नागेश्वरेऽवसत् ।
पद्मामालोक्य तां प्राह [18]कीरो मानुषभाषया ॥ १५ ॥

---

१. ख बहु २. ग वचः शोकसमादितम्
३. क गच्छ ४. ग वीर
५. ग तस्य वै देवनिर्मितः ६. ग × मध्यस्थेन ··· ··· भविष्यति
७. ख तथा
८. ख ग सर्वं जानासि त्वं पक्षिन् नीतिं कालं विधिं तथा
९. कल्केः १०. घ शुकः
११. क घ त्वरन् १२. ख असौ
१३. ग वीजपूरफलं गृह्णन् १४. घ ययौ
१५. घ राजनिवेशनम् १६. घ गत्वा
१७. घ नागेश्वरे वसन् १८. घ शुको

कुशलं ते वरारोहे रूपयौवनशालिनि ।
त्वामहं लोलनयनां [1]लक्ष्मीरूपामिवापराम् ॥ १६ ॥

पद्माननां पद्मगन्धां पद्मनेत्रां [2]कराम्बुजे ।
कमलं [3]कलयन्तीं त्वां लक्षयामि परां श्रियम् ॥ १७ ॥

[4]किं धात्रा सर्वजगतां रूपलावण्यसम्पदाम् ।
निर्मितासि वरारोहे जीवानां [5]मोहकारिणि ॥ १८ ॥

इति भाषितमाकर्ण्य [6]कीरस्यामृतमद्भुतम् ।
हसन्ती प्राह सा देवी तं पद्मा [7]सिंहलप्रिया ॥ १९ ॥

कस्त्वं [8]कस्मादागतोऽसि कथं मां [9]कीररूपधृक् ।
देवो वा दानवो वा त्वमागतोऽसि दयापरः ॥ २० ॥

[10]शुक उवाच

सर्वज्ञोऽहं कामगामी सर्वशास्त्रार्थ[11]तत्त्ववित् ।
देवगन्धर्वभूपानां [12]सभासु परिपूजितः ॥ २१ ॥

चरामि स्वेच्छया खे त्वामीक्षणार्थमिहागतः ।
त्वामहं हृदि संतप्तां [13]त्यक्तभामां मनस्विनीम् ॥ २२ ॥

हास्यालाप[14]सखीसङ्गदेहाभरणवर्जिताम् ।
विलोक्याहं दीनचेताः पृच्छामि [15]श्रोतुमीरितम् ॥ २३ ॥

१. ख शान्ति
२. क कराम्बुजा
३. ख कामयन्तीं, ग लालयन्तीं
४. ग विधात्रा
५. ग मोहकारिणी
६. घ करिष्यामि तमद्भुतम्
७. ख सिंहलात्मजा, घ पद्ममालिनी
८. घ शुक
९. ग इतः कथं, ख परः कथं
१०. ख ×
११. क सारवित्
१२. ख सतामुपरिपूजितः
१३. घ त्यक्तभोगां
१४. सखीमध्ये
१५. ख ग श्रोतुमीश्वर



कोकिलालापसन्तापजनकं मधुरं मृदु ।
तव दन्तोष्ठजिह्वाग्रलुलिताक्षरपङ्क्तयः ।
यत्कर्णकुहरे मग्नास्तेषां किं वर्ण्यते तपः ॥ २४ ॥

सौकुमार्यं शिरीषस्य [1]क्व कान्तिर्वा निशाकरे ।
पीयूषं [2]प्रकिरन्त्येवानन्दं ब्रह्मणि ते बुधाः ॥ २५ ॥

तव बाहुलताबद्धा ये [3]पास्यन्ति [4]सुधाननम् ।
तेषां तपोदानजपै[5]श्चार्थैः किं वा करिष्यति ॥ २६ ॥

तिलकालकसंमिश्रं लोल[6]कुण्डलमण्डितम् ।
[7]लोलेक्षणोल्लसद्वक्त्रं पश्यतां न पुनर्भवः ॥ २७ ॥

[8]सिंहलेशसुते स्वामि वद [9]तन्वङ्गि पद्मके ।
[10]तपःक्षीणामिव तनूं लक्षयामि रुजं विना ।
[11]कनकप्रतिमा यद्वत् पांसुभिर्मलिनीकृता ॥ २८ ॥

[12]पद्मोवाच

किं रूपेण कुलेनापि [13]धनेनाभिजनेन वा ।
सर्वं [14]निष्फलतामेति यस्य [15]दैवमदक्षिणम् ॥ २९ ॥

शृणु कीर समाख्यानं यदि वा विदितं तव ।
बाल्यपौगण्डकैशोरे हरसेवां करोम्यहम् ॥ ३० ॥

१. ख कुसुमे वा निशाकरः
२. घ क्व वदन्त्येवानन्दं
३. ख पश्यन्ति
४. ख शुभाननम्
५. घ श्चार्थैः किं जनयिष्यति
६. ग कुन्तल
७. नीले
८. क ख बृहद्रतसुते, घ बृहद्रथसुते
९. घ भामिनि
१०. ख उपक्षीणामिव
११. ग सुवर्णप्रतिमा
१२. ख ×
१३. क धनेनाभिमतेन
१४. ग विफलतामेति
१५. ख दैवं सुदारुणम्

[1]महेश्वरस्तु तुष्टात्मा तया च मम पूजया।
[2]आविर्भूय महायोगी वचनमिदमब्रवीत।
वरं वरय [3]ललने मत्तः यत् त्वमभीप्ससि॥ ३१॥
लज्जयाधोमुखीमग्रे स्थितां मां वीक्ष्य शङ्करः।
प्राह ते भविता स्वामी हरिर्नारायणः [4]परः॥ ३२॥
[5]देवो वा दानवो वान्यो गन्धर्वो [6]वा तवेक्षणात्।
कामेन मनसा नारी भविष्यति न संशयः॥ ३३॥
[7]इति दत्त्वा वरं सोमः प्राह [8]विष्णवर्चनं यथा।
तथाहं [9]ते प्रवक्ष्यामि समाहितमनाः शृणु॥ ३४॥
[10]एताः सख्यो नृपाः पूर्वमाहूता ये स्वयंवरे।
[11]पित्रा धर्मार्थिना दृष्ट्वा [12]सुरम्यां यौवनान्विताम्॥ ३५॥
स्वागतास्ते सुखासीना [13]विवाहे कृतनिश्चयाः।
[14]रूपवन्तो गुणोपेता[15]स्तारुण्यधनसम्मताः॥ ३६॥
स्वयंवरगतां मां ते विलोक्य [16]रुचिरप्रभाम्।
रत्नमालाश्रितकरां निपेतुः [17]स्वयमेव हि॥ ३७॥
तत उत्थाय [18]संभ्रान्ताः संप्रेक्ष्य स्त्रीत्वमात्मनः।
[19]स्तनभारनितम्बेन गुरुणा परिणामिताः॥ ३८॥

---

१. घ तेन पूजाविधानेन तुष्टो भूत्वा महेश्वरः
२. क ख घ × आवि···ब्रवीत्
३. क ख घ पद्मे त्वमित्याह प्रियया सह
४. घ प्रभुः
५. ग देवदानवगन्धर्वोऽन्यो वापि
६. ख ×
७. ग घ इत्थं सोमो वरं दत्त्वा
८. ग हर्यर्चनं
९. ख संप्रवक्ष्यामि
१०. ख इमाः
११. ख ग पिता धर्मार्थी मां दृष्ट्वा सुरम्यां नवयौवनां
१२. क घ रम्यां मां
१३. क घ विवाह
१४. क घ युवानो गुणवन्तश्च तारुण्यधनसम्मताः
१५. ग यौवन
१६. क वरवर्णिनीं
१७. क घ काममोहिताः, ख कामपीडिताः
१८. ख सा नारी
१९. ग श्रोणी



[1]ह्रिया भिया च शत्रूणां मित्राणामतिदुःखदम्।
स्त्रीभावं मनसा [2]चिन्त्य [3]मामेवानुगताः शुक॥ ३९॥
[4]श्रीहरेः परिचर्यायां [5]रताः सख्यश्च सर्वदा।
मया सह तपोध्यान[6]पूजाः कुर्वन्ति सम्मताः॥ ४०॥
तदुदितमिति [7]स निशम्य कीरः श्रवणसुखं निजमानसप्रकाशम्।
[8]समुचितवचनैः प्रतीक्ष्य पद्मां मुरहरयजनं पुनः [9]प्रचष्टे॥४१॥

[10]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये शुकपद्मा-
संवादो [11]नाम षष्ठोऽध्यायः।

---

१. ख प्रिया
२. क घ ध्यात्वा
३. ग सर्वा मां परिनिष्ठिताः
४. क घ परिचर्याहररताः सख्यः सर्वगुणान्विताः
५. ग सख्यो मे निरताः सदा
६. ग पूजां
७. क ख घ संनिशम्य
८. ख ग समुदितवचनैः
९. ख पप्रच्छ
१०. ख × इति श्री
११. ग × नाम

# सप्तमोऽध्यायः

## शुक उवाच

विष्णवर्चनं शिवेनोक्तं श्रोतुमिच्छाम्यहं [1]शुभे ।
धन्यासि कृतपुण्यासि [2]शिवदीक्षासमर्चिता ॥ १ ॥
अहं भाग्यबशादत्र [3]समागतस्तवान्तिकम् ।
[4]कृपया वद साम्प्रतं कीराकारनिवारणम् ॥ २ ॥
[5]भगवद्भक्तियोगं च जपध्यानविधिं मुदा ।
परमानन्दसन्दोहदान[6]यज्ञं श्रुतिप्रियम् ॥ ३ ॥

## [7]पद्मोवाच

[8]श्रीविष्णोरर्चनं पुण्यं [9]शिवेन [10]परिकीर्त्तितम् ।
यच्छ्रद्धयानुष्ठितस्य श्रुतस्य [11]गदितस्य च ॥ ४ ॥
सद्यः पापहरं पुंसां गुरुगोब्रह्मघातिनाम् ।
समाहितेन मनसा शृणु कीर [12]यथोदितम् ॥ ५ ॥
[13]त्वया यथोक्तकर्माणि पूर्वाह्ले स्नानकृच्छुचिः ।
प्रक्षाल्य पाणिपादौ च स्पृष्ट्वापः स्वासने वसेत् ॥ ६ ॥
प्राचीमुखः संयतात्मा [14]साङ्गं न्यासं प्रकल्पयेत् ।
[15]भूतशुद्धिं ततोऽर्घ्यस्य स्थापनं विधिवच्चरेत् ॥ ७ ॥

१. ख तव
२. क घ शिवशिष्यत्वमागता
३. क घ समागम्य तवान्तिकम्
४. क घ शृणोमि, ग परमाद्भुतं
५. क भक्त्या भक्तियोगं च, ख भगवद्मुक्तियोगं च
६. क घ दक्षं
७. क ख घ ×
८. क ×श्रीविष्णो……गदितस्य च
९. ग हरमुखविनिर्गतम्
१०. घ परिभाषितम्
११ ख कथितस्य
१२. ख यथोचितम्
१३. घ कृत्वा
१४. क साङ्गन्यासं
१५. ख ग अर्घस्य भूतशुद्धिं च



ततः [1]केशवकीर्त्यादिन्यासेन तन्मयो भवेत् ।
आत्मानं तन्मयं ध्यात्वा हृदिस्थं स्वासने न्यसेत् ॥ ८ ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवासो[2]विभूषणैः ।
[3]यथोपचारैः संपूज्य [4]मूलमन्त्रेण देशिकः ॥ ९ ॥
ध्यायेत् पादादिकेशान्तं हृदयाम्बुजमध्यगम् ।
प्रसन्नबदनं देवं भक्ताभीष्टफलप्रदम् ॥ १० ॥

[5]ओं नमो नारायणाय [6]स्वाहा

[7]योगेश सिद्धविबुधैः परिभाव्यमानं
लक्ष्म्यालयं [8]तुलसिकाश्चितभक्तभृङ्गम् ।
प्रोत्तुङ्गरक्तनखरांगुलिपत्रचित्रं
गङ्गारसं हरिपदाम्बुजमाश्रयेऽहम् ॥ ११ ॥
[9]गुम्फन् [10]मणिप्रचयघट्टितराजहंस-
सिञ्चत्सुनूपुरयुतं पदपद्मवृन्तम् ।
पीताम्बराञ्चलविलोल[11]चलत्पताकं
स्वर्णत्रिवक्रवलयं च हरेः स्मरामि ॥ १२ ॥
जङ्घे सुपर्णगलनीलमणि[12]प्रवृद्धे
[13]शोभास्पदारुणमणिद्युतिचञ्चुमध्ये ।
आरक्तपादतललम्बनशोभमाने
लोकेक्षणोत्सवकरे च हरेः स्मरामि ॥ १३ ॥

१. ग केशवाकृत्यादि, घ केशवकृत्यादि
२. ख विभूषितैः
३. ग उपचारेण
४. ग विधिवदेकदेशिकः
५. ग ×
६. ख ×
७. घ योगेन
८. ख तुलसिकाचित
९. क गुल्फम्, ख गुल्मं
१०. ख माला
११. घ बलत्
१२. ख प्रवाहे
१३. ख ग भास्वत्

ते जानुनी [1]खगपतेर्भुजमूलसङ्ग-
रङ्गोत्सवावृततडिद्वसने विचित्रे ।
चञ्चत्पतत्रमुखनिर्गतसामगीतं
विस्तारितात्मयशसी च हरेः स्मरामि ॥ १४ ॥

विष्णोः कटिं विधिकृतान्तमनोजभूमिं
जीवाण्डकोषगणस[2]ङ्गदुकूलमध्याम् ।
नानागुणप्रकृति[3]पीतविचित्रवस्त्रां
ध्यायेन्निबद्ध[4]वसनां खगपृष्ठसंस्थाम् ॥ १५ ॥

[5]शान्तोदरं भगवतस्त्रिवलिप्रकाश-
मावर्त्तनाभिविकसद्विधि[6]जन्मपद्मम् ।
नाडीनदीगणरसोत्थसितान्त्रसिन्धुं
ध्यायेऽण्ड[7]कोषनिलयं [8]मृदुलोमरेखम् ॥ १६ ॥

वक्षः पयोधितनयाकुचकुङ्कुमेन
हारेण कौस्तुभमणिप्रभया [9]विभातम् ।
[10]श्रीवत्सलक्ष्महरिचन्दनजप्रसून-
मालोचितं भगवतः सुभगं स्मरामि ॥ १७ ॥

बाहू [11]सुवेशसदनौ वलयाङ्गदादि-
शोभास्पदौ दुरित[12]दैत्यविनाशदक्षौ ।
तौ दक्षिणौ [13]भगवतश्च गदासुनाभ-
तेजोजितौ सुललितौ मनसा स्मरामि ॥ १८ ॥

१. घ मखपते
२. ख बीजकञ्चुक
३. क चारु
४. ख रसनां
५. ख घ शातोदरं
६. ख युग्म
७. क ख कोटि
८. क घ तनु
९. ग विभाति
१०. ख श्रीवत्सलक्ष्माहृत्स्वमुरस्वप्रसूनमालोचितं
११. ख सुरेश
१२. ख दानवनाशशीलौ
१३. ख भगवतश्च चमूनाशतेजोजितौ



वामौ भुजौ मुररिपोर्धृत[1]पद्मशङ्खौ
श्यामौ करीन्द्रकरवन् मणिभूषणाढ्यौ ।
[2]रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ
पद्मालयाप्रियकरौ रुचिरौ [3]स्मरामि ॥ १९ ॥

कण्ठं [4]मृणालममलं मुखपङ्कजस्य
लेखात्रयेण वनमालिकया निवीतम् ।
किं वा विमुक्ति[4]रसमन्त्रकसत्फलस्य
वृन्तं चिरं भगवतः सुभगं स्मरामि ॥ २० ॥

[5]रक्ताम्बुजं दशनहासविकाशरम्यं
रक्ताधरौष्ठवरकोमलवाक्[6]सुधाढ्यम् ।
सन्मानसोद्भवचलेक्षणपत्रचित्रं
लोकाभिराममनलं च हरेः स्मरामि ॥ २१ ॥

[7]शूरात्मजावसथगन्धविदं सुनासं
भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम् ।
कायोत्सवं च [8]कमलाहृदयप्रकाशम्
सञ्चिन्तयामि हरिवक्त्रविलासदक्षम् ॥ २२ ॥

कर्णौ लसन् मकरकुण्डलगण्डलोलौ
नानादिशां च नभसश्च विकास[9]गेहौ ।
[10]लोलालकप्रचयचुम्बनकुञ्चिताग्रौ
लग्नौ हरेर्मणिकिरीटतटे स्मरामि ॥ २३ ॥

१. ख शङ्खपद्मौ
२. घ रक्ताङ्गुल
३. ख ग + स्मरामि
४. घ रसमस्तक
५. ख ग वक्राम्बुजं
६. ख केशर
७. क ख भू
८. ग प्रसक्तं
९. क हेतो
१०. ख लोलाललीला [illegible]

भालं[1] विचित्रतिलकं प्रियचारुगन्ध-
गोरोचनारचनया ललनाक्षिसख्यम् ।
ब्रह्मैकधाममणिकान्तकिरीटजुष्टम्
ध्यायेन् मनोनयनहारकमीश्वरस्य ॥ २४ ॥

श्रीवासुदेवचिकुरं कुटिलं निबद्धं
नानासुगन्धिकुसुमैः स्वजनादरेण ।
दीर्घं[3] रमाहृदयगाशमनं धुनन्तम्
ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥ २५ ॥

मेघाकारं सोमसूर्यप्रकाशं
सुभ्रून्नसं[4] चक्रचापैकमानम्
लोकातीतं पुण्डरीकायताक्षम्
विष्वक्सेनं[5] चाश्रयेऽहं[6] स्वपूर्वम् ॥ २६ ॥

दीनं हीनं सेवया वेदवत्या[6]
पापैस्तापैः पूरितं मे शरीरम् ।
लोभाच्छन्नं[7] शोकमोहादिविद्धं[8]
कृपादृष्ट्या पाहि मां वासुदेव ॥ २७ ॥

ये भक्त्याद्यां ध्यायमानां मनोज्ञाम्
व्यक्तिं विष्णोः षोडशश्लोक[9]पुष्पैः[10] ।
स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः
शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति ॥ २८ ॥

१. ग भाले
२. ख पाशमनन्ततस्त्वम्
३. ख सूत्रमुद्वहन्
४. घ विद्युज्ज्वैल
५. ख आनुपूर्व्यम्
६. ग वेदगत्या
७. क घ लोभाक्रान्तं
८. घ शोकमोहाधि
९. ख × षोडश ····· परिभाषितम् (२९)
१०. क मुख्यैः



पद्मोरितमिदं[1] पुण्यं शिवेन परिभाषितम् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं दरम्[2] ॥ २९ ॥

पठन्ति ये महाभागास्ते मुच्यन्तेऽहंसोऽखिलात् ।
धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम्[3] ॥ ३० ॥

[4]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
हरिभक्तिविवरणं [5]नाम सप्तमोऽध्यायः ॥

१. ग पद्मया कथितं
२. क परम्
३. ख + समाप्तश्च
४. ख × इति श्री
५. ग × नाम

# अष्टमोऽध्यायः

**सूत उवाच**

[1]इति पद्मावचः श्रुत्वा कीरो धीरः सतां मतः ।
कल्किदूतः सखीमध्ये स्थितां पद्मामथाब्रवीत् ॥ १ ॥
[2]वद पद्मे साङ्गपूजां हरेरद्भुतकर्मणः ।
यामास्थाय विधानेन चरामि [3]भुवनत्रयम् ॥ २ ॥

**[4]पद्मोवाच**

एवं पादादिकेशान्तं ध्यात्वा तं जगदीश्वरम् ।
[5]पुण्यात्मा देशिको मूलं मन्त्रं जपति मन्त्रवित् ॥ ३ ॥
[6]जपादनन्तरं दण्डप्रणति [7]मतिमांश्चरेत् ।
विष्वक्सेनादिकानां तु दत्त्वा [8]विष्णुनिवेदितम् ॥ ४ ॥
तत उद्वास्य [9]हृदये [10]स्थापयेन् मनसा सह ।
नृत्यन् गायन् हरेर्नाम तं पश्यन् सर्वतः स्थितम् ॥ ५ ॥
ततः [11]शेषं मस्तकेन कृत्वा नैवेद्यभुग् भवेत् ।
इत्येतत् कथितं कीर कमलानाथसेवनम् ॥ ६ ॥
प्रकामानां [12]कामपूरमकामामृतदायकम् ।
श्रोत्रानन्दकरं देवगन्धर्वनरहृत्प्रियम् ॥ ७ ॥

१. ग पद्माय वचनं
२. ख ब्रूहि
३. क भुवनत्रये
४. ग ×
५. घ पूर्णात्मा
६. क जगादानन्तरे
७. क मतिमान् स्मरेत्
८. क विष्णुनिवेदनम्
९. ग ह्यास्थाय
१०. ग वासयेन्
११. ख शेषान्
१२. घ कामपूरणकामामृतदायकम्



**[1]शुक उवाच**

समीरितं श्रुतं साध्वि भगवद्भक्तिलक्षणम् ।
त्वत्प्रसादात् पापिनो मे कीरस्य भुवि मुक्तिदम् ॥ ८ ॥
किन्तु त्वां काञ्चनमयीं प्रतिमां रत्नभूषिताम् ।
[2]सजीवमीव पश्यामि दुर्लभां रूपिणीं [3]श्रियम् ॥ ९ ॥
नान्यां पश्यामि सदृशीं रूपशीलगुणैस्तव ।
[4]नान्यो योग्यो गुणी भर्त्ता भुवनेऽपि च [5]दृश्यते ॥ १० ॥
किन्तु पारे समुद्रस्य पश्याश्चर्यरूपवान् ।
गुणवानीश्वरः साक्षात् कश्चिद् दृष्टोऽतिमानुषः ॥ ११ ॥
न हि धातृकृतं मन्ये शरीरं सर्वसौभगम् ।
[6]तस्य श्रीवासुदेवस्य नान्तरं ध्यानयोगतः ॥ १२ ॥
त्वया ध्यानं [7]तु यद्रूपं [8]विष्णोरमिततेजसः ।
तत्साक्षात्कृतमित्येव न तत्र कियदन्तरम् ॥ १३ ॥

**[9]पद्मोवाच**

ब्रूहि [10]तन् मम किं कुत्र जातः [11]कीर परावरम् ।
[12]जानासि तत्कृतं कर्म विस्तरेणात्र वर्णय ॥ १४ ॥
वृक्षादागच्छ [13]पूजां ते करोमि [14]विधिबोधिताम् ।
वीजपूरफलाहारं कुरु [15]साधो पयः पिव ॥ १५ ॥

१. ख ×
२. ख ग सजीवामिह
३. ख ×, ग प्रियम्
४. ख मान्यो
५. ग वर्तते
६. घ यस्य
७. क यावद्रूपम्
८. क हरे
९. ग ×
१०. ख तन्नाम
११. ख ग कोऽपि
१२. ख जानामि
१३. क कीर
१४. क ख पूजनं सखे
१५. घ साधु

तव [1]चञ्चुयुगं पद्मरागादरुणमुज्ज्वलम् ।
रत्नसंघट्टितमहं करोमि [2]मनसा [3]प्रियम् ॥ १६ ॥

कन्धरं सूर्यकान्तेन मणिना स्वर्णघट्टिना ।
करोम्याच्छादनं चारुमुक्ताभिः [4]पक्षतिं तव ॥ १७ ॥

पतत्रं कुङ्कुमेनाङ्गं [5]सौरभेणातिचित्रितम् ।
करोमि नयनानन्ददायकं [6]रूपवत्तमम् ॥ १८ ॥

[7]मुक्तागुच्छमणिव्रात[8]घर्घरेणातिशब्दितम् ।
पादयोर्नूपुराला[9]पनादितं त्वां करोम्यहम् ॥ १९ ॥

तवामृतकथाव्रातत्यक्ताधिं शाधि मामिह ।
सखीभिः [10]संगताभिस्ते किं करिष्यामि तद् वद ॥ २० ॥

इति [11]पद्मावचः श्रुत्वा तदन्तिकमुपागतः ।
कीरो धीरः प्रसन्नात्मा प्रवक्तुमुपचक्रमे ॥ २१ ॥

[12]ब्रह्मणा प्रार्थितः श्रीशो महाकारुणिको [13]बभौ ।
शम्भले विष्णुयशसो गृहे धर्मै[14]रिरक्षिषुः ॥ २२ ॥

चतुर्भिर्भ्रातृभिर्ज्ञा[15]तिगोत्रजैः परिवारितः ।
कृतोपनयनो वेदमधीत्य [16]रामसन्निधौ ॥ २३ ॥

---

१. ख पक्षयुगं
२. घ मनसः
३. ग प्रिय
४. ख सुपक्षं
५. क सौरभेंनापि
६. घ रुपमीदृशम्
७. क घ पुच्छमच्छमेणिव्रात
८. क घर्घरेणापि
९. घ लापिनं
१०. क संयताभिः, घ संगीताभिः
११. ग तस्या वचः
१२. ख + शुक उवाच, ख कीर उवाच
१३. विभुः
१४. क रिरक्षितुः
१५. ख जाति
१६. ग गुरुसन्निधौ





धनुर्वेदं च गान्धर्वं [1]शिवादश्वमसिं शुकम् ।
कवचं च वरं लब्ध्वा शम्भलं [2]पुनरागतः ॥ २४ ॥

विशाखयूपभूपालं प्राप्य [3]शिक्षां विशेषतः ।
धर्मानाख्याय मतिमान् अधर्मांश्च निराकरोत् ॥ २५ ॥

इति पद्मा तदाख्यानं निशम्य [4]मुदितानना ।
प्रस्थापयामास शुकं कल्केरानयनादृता ।
भूषयित्वा स्वर्णरत्नैस्तमुवाच कृताञ्जलिः ॥ २६ ॥

[5]निवेदितं तु [6]जानासि किमन्यत् [7]कथयामि ते ।
स्त्रीभावभयभीतात्मा यदि नायाति [8]स प्रभुः ॥ २७ ॥

तथापि [9]मे कर्मदोषात् [10]प्रणतिं कथयिष्यसि ।
शिवेन यो वरो दत्तः स मे शापोऽभवत् [11]किल ॥ २८ ॥

पुंसां मद्दर्शनेनापि स्त्रीभावं कामतः शुक ।
[12]श्रुत्वेति पद्मामामन्त्र्य प्रणम्य च पुनः पुनः ॥ २९ ॥

उड्डीय प्रययौ कीरः शम्भलं कल्किपालितम् ।
तमागतं समाकर्ण्य कल्किः परपुरञ्जयः ॥ ३० ॥

क्रोडे कृत्वा ददर्श तं स्वर्णरत्नविभूषितम् ।
सानन्दं परमानन्ददायकं प्राह तं [13]मुदा ॥ ३१ ॥

---

१. ग शिवदत्तमसिं, ख शिवदत्तमहिं
२. ख पुनरागमत्
३. घ शिक्षाविशेषतः
४. घ मृदितानना
५. घ + पद्मोवाच
६. ख जानामि
७. घ कथयाम्यहम्
८. ग मम
९. क कर्मणो दोषात्
१०. ग प्रणामं
११. ग प्रभो
१२. क श्रुत्वापि
१३. क पुरा, घ तदा

कल्किः परमतेजस्वी [1]परस्मिन्न[2]मलं शुकम् ।
पूजयित्वा करे स्पृष्ट्वा पयःपानेन तर्पयन् ॥ ३२ ॥

तन्मुखे स्वमुखं दत्त्वा पप्रच्छ [3]विविधाः कथाः ।
कस्माद् देशाच्चरित्वा त्वं दृष्टापूर्वं किमागतः ॥ ३३ ॥

कुत्रोषितः कुतो लब्धं [4]मणिकाञ्चनभूषणम् ।
अहर्निशं [5]त्वन्मिलनं [6]वाञ्छितं मम [7]सर्वतः ।
तवानालोकनेनापि क्षणं मे युगवद् भवेत् ॥ ३४ ॥

इति [8]तस्य वचः श्रुत्वा प्रणिपत्य शुको भृशम् ।
कथयामास पद्मायाः [9]कथाः पूर्वोदिता यथा ॥ ३५ ॥

संवादमात्मनस्तस्या निजालङ्कारधारणम् ।
सर्वं तद् वर्णयामास तस्या प्रणतिपूर्वकम् ॥ ३६ ॥

श्रुत्वेति वचनं कल्किः शुकेन सहितो मुदा ।
जगाम त्वरितोऽश्वेन शिवदत्तेन तन्मनाः ॥ ३७ ॥

समुद्रपारममलं सिंहलं [10]जलसंकुलम् ।
नानाविमानबहुलं भास्वरं मणिकाञ्चनैः ॥ ३८ ॥

[11]प्रासादसदनाग्रेषु पताकातोरणाकुलम् ।
श्रेणीसभापणाट्टालपुरगोपुरमण्डितम् ॥ ३९ ॥

पुरस्त्रीपद्मिनीपद्मगन्धामोदद्विरेफिणीम् ।
पुरीं कारुमतीं तत्र ददर्श [12]पुरतः स्थिताम् ॥ ४० ॥

१. क तरस्विन्
२. ख विमलं
३. ग विविधां कथाम्
४. घ सुवर्णाङ्गद
५. क त्वन्नयनं
६. ग प्रार्थितं
७. ग सर्वदा
८. घ कल्केः
९. ख कथां पूर्वोदितां
१०. ख जलवेष्टितम्
११. ख प्रासादसद्मसंवाद
१२. ग सलिलालयाम्



मरालजालसं[1]चारविलोल[2]कमलान्तराम् ।
[3]उन्मीलिताब्जमालातिकलिताकुलितं [4]सरः ॥ ४१ ॥

[5]जलकुक्कुटदात्यूहनादितं हंससार[6]सैः ।
ददर्श स्वच्छपयसां लहरीलोलवीजितम् ॥ ४२ ॥

वनं कदम्बकुद्दालशालतालाम्र[7]केसरैः ।
कपित्थाश्वत्थखर्जूरबीजपूरकरञ्जकैः ॥ ४३ ॥

पुन्नागपनसैर्नागरङ्गैरर्जुनशिंशपैः ।
क्रमुकैर्नारिकेलैश्च [8]नानावृक्षोपशोभितम् ॥ ४४ ॥

वनं ददर्श रुचिरं फलपुष्प[9]दलावृतम् ।
[10]रेवातरङ्गिणीवारिपरिखापरिपालितम् ॥ ४५ ॥

दृष्ट्वा [11]हृष्टतनुः शुकं सकरुणः [12]कल्किः पुरान्ते वने
प्राह प्रीतिकरं वचोऽत्र सरसि स्नातव्यमित्यादृतः ।
तच्छ्रुत्वा विनयान्वितः प्रभुमतं यामीति [13]पद्माश्रमं
तत्सन्देशमिह प्रयाणमधुना [14]गत्वा स कीरोऽवदत् ॥ ४६ ॥

[15]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[16]कारुमतीप्रयाणं [17]नाम अष्टमोऽध्यायः[18] ।

१. घ संचाल
२. ख कमलोत्तराम्
३. क उन्मीलितालि, घ उन्मीलताब्ज
४. ग पयः
५. क जलसंकुलदात्यूह
६. ख सौरभैः
७. ख केशरैः
८. घ नानावृक्षैश्च
९. क दलाकुलम्
१०. घ ×
११. ख तनूरुहः
१२. ख प्रान्ते
१३. ग पद्मालयं
१४. क वक्तुम्
१५. ख × इति श्री
१६. घ आगमनवर्णनं
१७. ग × नाम
१८. ग + समाप्तः

# नवमोऽध्यायः

## सूत उवाच

कल्किः सरोवराभ्यासे जलाहरणवर्त्मनि ।
स्वच्छस्फटिकसोपाने प्रवालाचितवेदिके ॥ १ ॥
सरोजसौरभव्यग्रभ्रमद्भ्रमरनादिते ।
[1]कदम्बपोतपत्रालिवारितादित्यदर्शने ॥ २ ॥
समुवासासने [2]चित्रे सदश्वेनावतारितः ।
कल्किः प्रस्थापयामास शुकं [3]पद्माश्रमं [4]मुदा ॥ ३ ॥
[5]नागकेशरमध्यस्थः शुको गत्वा ददर्श ताम् ।
हर्म्यस्थां [6]बिसिनीपत्रशायिनीं सखीभिर्वृताम् ॥ ४ ॥
[7]निश्वासवाततापेन म्लायतीं वदनाम्बुजम् ।
उत्क्षिपन्तीं सखीदत्तकमलं चन्दनोक्षितम् ॥ ५ ॥
रेवावारिपरिस्नातं परागास्यं समागतम् ।
[8]घृतनीरं रसगतं निन्दन्तीं पवनं प्रियम् ॥ ६ ॥
शुकः सकरुणः साधुवचनैस्ताम[9]तोषयत् ।
सा त्वमेह्येहि ते स्वस्ति स्वागतं स्वस्ति ते शुभे ॥ ७ ॥

---

१. घ कदम्बपाल
२. क रम्ये
३. ग पद्मालयं
४. क द्रुतम्
५. ख पुन्नागेश्वरमध्यस्थः, घ स नागेश्वरमध्यस्थः
६. ख विषपत्रेषु
७. क + कर्पूरकुङ्कुमक्लिन्नचन्दनं खलिकालितम् ।
निन्दन्तीं परिशेषन्तीमुद्वसन्तीं स्मरातुराम् ॥
निरोषधेन कामेन प्रलपन्ती पुनः पुनः ।
८. ख घृतचीरं
९. ख अपूजयन्



गते [1]त्वय्यतिरु[2]ग्नाहं शान्तिस्तेऽस्तु रसायनात् ।
रसायनं दुर्लभं मे सुलभं ते [3]शिवाश्रये ॥ ८ ॥
क्व मे भाग्यविहीनाया इहैव वरवर्णिनि ।
[4]देवि तं सरसस्तीरे [5]प्रतिष्ठाप्यागता वयम् ॥ ९ ॥
एवमन्योन्यसम्बादमुदितात्ममनोरथे ।
मुखं मुखेन नयनं [6]नयनेनामृतं ददौ ॥ १० ॥
विमला [7]मालिनी [8]लीला [9]कमला कामकन्दला ।
विलासिनी चारुमती कुमुदेत्यष्ट[10]नायिकाः ॥ ११ ॥
सख्य एता [11]मतास्ताभिर्जलक्रीडार्थमुद्यताः ।
पद्मा प्राह सरस्तीर[12]मायान्तु सा मया स्त्रियः ॥ १२ ॥
[13]इत्याख्याया स्वशिविकामारुह्य परिवारिता ।
सखीभिश्चारुवेशाभिर्भूत्वा स्वान्तःपुराद् वहिः ।
[14]प्रययौ त्वरितं द्रष्टुं भैष्मी यदुपतिं यथा ॥ १३ ॥
जनाः पुमांसः पथि ये पुरस्थाः प्रदुद्रुवुः स्त्रीत्वभयाद् दिगन्तरम् ।
शृङ्गाटके वा विपणौ स्थिता [15]ये निजाङ्गगास्थापित[16]पुण्यकार्याः ॥ १४ ॥
निवारितां तां शिविकां वहन्त्यो नार्योऽतिमत्ता बलवत्तराश्च ।
पद्मा शुकोक्त्या तदुपर्युपस्था जगाम ताभिः परिवारिताभिः ॥ १५ ॥

---

१. क त्वयि तिरश्चाहम्
२. घ व्यग्राहं
३. शिवाश्रमे
४. क देहि
५. ख प्रतिष्ठाप्य गता
६. घ नयने साद्दता
७. ख वासिनी
८. ख × लीला ·····कन्दला
९. ग विमला कमकन्दला
१०. क नायकाः
११. वृतास्तोभिः
१२. ख समायान्तु
१३. घ इत्याख्याशु शिविकाम्
१४. क ययौ सा
१५. क वा
१६. ख पण्यकार्याः

सरोजलं सारसहंसनादितं प्रफुल्लपद्मोद्भवरेणुवासितम् ।
चेरुर्विगाह्या[1]शु [2]सुधाकरालसाः कुमुद्वतीनामुदयाय शोभनाः ॥ १६ ॥

तासां मुखामोद[3]मदान्धभृङ्गा विहाय पद्मानि मुखारविन्दे ।
लग्नाः सुगन्धाधिकमाकलय्य निवारिताश्चापि न तत्यजुस्ते ॥ १७ ॥

हासोपहासैः [4]सरसः प्रकाशैर्वाद्यैश्च नृत्यैश्च[5]जले विहारैः ।
करग्रहैस्ता जलयोधनार्त्ता[6]श्चकर्ष ताभिर्वनिताभि[7]रुच्चैः ॥ १८ ॥

सा [8]कामतप्ता मनसा शुकोक्तिं विविच्य पद्मा सखिभिः समेताः ।
जलात् समुत्थाय महार्हभूषा जगाम निर्दिष्टकदम्ब[9]वृक्षम् ॥ १९ ॥

सुखे शयानं मणिवेदिकागतं [10]कल्किं पुरस्ता[11]दपि सूर्यवर्चसम् ।
महामणिव्रातविभूषणाचितं शुकेन सार्द्धं तमुदैक्षतेशम् ॥ २० ॥

[12]तमालनीलं कमलापतिं प्रभुं [13]पीताम्बरं चारुसरोजलोचनम् ।
आजानुबाहुं पृथुपीनवक्षसं श्रीवत्ससत्कौस्तुभकान्तिराजितम् ॥ २१ ॥

[14]तदद्भुतं रूपमवेक्ष्य पद्मा संस्तम्भिता विस्मृतसत्क्रियार्थी ।
[15]सुप्तं तु संबोधयितुं प्रवृत्तं निवारयामास विशङ्कितात्मा ॥ २२ ॥

कदाचिदेषोऽतिबलोऽतिरूपी मद्दर्शनात् स्त्रीत्वमुपैति साक्षात् ।
तदात्र [16]किं मे भविता भवस्य वरेण शापप्रतिमेन [17]लोके ॥ २३ ॥

१. क ख अति
२. क सुधाकराननाः
३. ख × मदान्ध······विहाय
४. घ सरस
५. क पयोविहारैः
६. ख चक्राभिः
७. ख धृष्टम्
८. घ कामातप्ता
९. ख खण्डम्, घ षण्डम्
१०. क कल्किः
११. घ अतिसूर्यवर्चसम्
१२. ख तमालतिलं
१३. ख × पीताम्बरं······राजितम्
१४. क तदाश्चर्यरूपम्
१५. ग शुक्रं
१६. ख मे किं
१७. ख काले



चराचरात्मा जगतामधीशः प्रबोधितस्तद्धृदयं [1]विविच्य ।
ददर्श पद्मां प्रियरूपशोभां यथा रमा [2]श्रीमधुसूदनाग्रे ॥ २४ ॥
[3]संवीक्ष्य मायामिव मोहिनीं [4]तां जगाद कामाकुलितः स कल्किः ।
सखीभि[5]रीशां समुपागतां तां कटाक्षविक्षेपवि[6]नामितास्याम् ॥ २५ ॥
[7]इहैहि सुस्वागतमस्तु भाग्यात् समागमस्ते कुशलाय मे स्यात् ।
तवाननेन्दुः किल [8]कामपूरतापापनोदाय सुखाय कान्ते ॥ २६ ॥
लोलाक्षि लावण्यरसामृतं ते कामाहिद[9]ष्टस्य [10]विषातुरस्य ।
[11]तनोतु शान्तिं [12]सुकृतेन कृत्या सुदुर्लभां जीवनमाश्रितस्य ॥ २७ ॥
वाहू [13]तवेतौ [14]सुरूपौ मनोज्ञौ हृदि स्थितं काममुदन्तवासम् ।
[15]चार्वायतौ चारुनखाङ्कुशेन द्विपं यथा [16]सादि[17]विदीर्णकुम्भम् ॥ २८ ॥
स्तनाविमावुत्थितमस्तकौ ते कामप्रतोदाविव वाससाक्तौ ।
[18]ममोरसा भिन्ननिजाभिमानौ सुवर्तुलौ व्यादिशतां प्रियं मे ॥ २९ ॥
[19]कान्तस्य सोपानमिदं वलित्रयं सूत्रेण [20]लोमावलिना सुलक्षितम् ।
विभाजितं वेदिविलग्न[21]मध्यमे कामस्य दुर्गा[22]श्रयमस्तु मे प्रियम् ॥ ३० ॥
रम्भोरु सम्भोगसुखाय मे स्यान् नितम्बबिम्बं [23]पुलिनोपमं ते ।
तन्वङ्गि तन्वंशुकसङ्गशोभं [24]प्रमत्तकामाविमदोद्यमालम् ॥ ३१ ॥

१. ख विचिन्त्य
२ स्वां मधुसूदनोऽग्र
३. क तं वीक्ष्य
४. क स्वां
५. क राशां
६. ख परिणासितास्यां
७. ख एह्येहि
८. ख ग मे च रक्त
९. क दग्धस्य
१०. घ विघातुरस्य
११. ख तनोति
१२. ख × सुकृतेन कृत्या
१३. तवेमौ
१४. ख मरुता, घ कुरुतां
१५. क गर्वायुतौ
१६. क स्याद्
१७. ग विकीर्ण
१८. ख मनोरमौ
१९. क प्रयाण
२०. घ लोमावलिलेखलक्षितम्
२१. ख मध्ये
२२. क रचनमस्तके प्रियम्
२३. ख कमलाशयं
२४. ख प्रमत्तकामारिमदाश्रयघ्नं

पादाम्बुजं तेऽङ्गुलि[1]पत्रचित्रितं [2]रणन् मरालक्वणनूपुरावृतम् ।
[3]कामाहिदष्टस्य ममास्तु शान्तये हृदि स्थितं [4]तन्नघने सुशोभने ॥ ३२ ॥

श्रुत्वैतद्वचनामृतं कलिकुलध्वंसस्य कल्केरलं
दृष्ट्वा सत्[5]पुरुषोत्तमस्य मुदिता पद्मा सखीभिर्वृता ।
कान्तं क्लान्तमनाः कृताञ्जलिपुटा प्रोवाच तत् सादरं
धीरं धीरपुरस्कृतं निजपतिं नत्वा नमत्कन्धरा ॥ ३३ ॥

[6]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
पद्माकल्किसाक्षात्संवादो [7]नाम नवमोऽध्यायः[8] ।

१. ख चित्र
२. घ वरं
३. घ कायाहि
४. घ पद्मघने
५. घ पुरुषत्वमस्य
६. क × इति श्री
७. ग × नाम
८. ग + समाप्तः

# दशमोऽध्यायः

## सूत उवाच

सा पद्मा तं हरिं गत्वा प्रेमगद्गद[1]भाषिणी ।
तुष्टाव व्रीडिता देवी [2]करुणावरुणालयम् ॥ १ ॥
प्रसीद जगतां नाथ [3]धर्मवर्मन् रमापते ।
[4]जानामि त्वां विशुद्धात्मन् वशगां त्राहि मां प्रभो ॥ २ ॥
[5]धन्यास्मि [6]कृतपुण्यास्मि तपोदानजपव्रतैः ।
त्वां [7]प्रतोष्य दुराराध्यं लब्धं तव [8]पदाम्बुजम् ॥ ३ ॥
[9]आज्ञां कुरु पदाम्भोजं तव [10]संदृश्य शोभनम् ।
[11]भवनं यामि राजानमाख्यातुं स्वागतं तव ॥ ४ ॥
[12]इति पद्मा रूपसद्मा [13]गत्वा स्वपितरं नृपम् ।
प्रोवाचागमनं कल्केर्विष्णोरंशस्य [14]दौत्यकैः ॥ ५ ॥
सखीमुखेन पद्मायाः पाणिग्रहणकाम्यया ।
हरेरागमनं श्रुत्वा सहर्षोऽभूद् बृहद्रथः[15] ॥ ६ ॥
[16]पुरोहितैर्ब्राह्मणैश्च पात्रैर्मित्रैः [17]सबान्धवैः ।
[18]वाद्यताण्डवगीतैश्च [19]पूजाभाजनपाणिभिः ॥ ७ ॥

१. ख भाषितं
२. ग कारुण्यसागरालयम्
३. ख ग दीनबन्धो जगत्पते
४. घ विदितोऽसि
५. घ धन्याहं
६. घ कृतपुण्याहं
७. क प्रपश्य
८. क पदामृतम्
९. क आज्ञापय
१०. घ संस्पृश्य
११. क गच्छामि स्वालयं ब्रह्मन्
१२. क तथा
१३. ग जगाम पितरं
१४. क दैहिकैः
१५. ख बृहद्व्रतः
१६. घ पुरोधसा
१७. घ सुमङ्गलैः
१८. क वाद्यैः
१९. घ पूजायोजन

जगामानयितुं कल्किं [1]सामात्यजनवेष्टितः ।
मण्डयित्वा कारुमतीं पताका[2]स्वर्णतोरणैः ॥ ८ ॥

ततो जलाशयाभ्यासं गत्वा विष्णुयशःसुतम् ।
[3]मणिवेदिकयासीनं भुवनैकगतिं पतिम् ॥ ९ ॥

घनाघनोपरि यथा शोभन्ते [4]रुचिराण्यहो ।
विद्युदिन्द्रायुधादीनि तथैव भूषणान्युत ॥ १० ॥

शरीरे [5]पीतवासांसि माल्याचन्दनभूषिते ।
रूपलावण्यसदने [6]मदनोद्यमनाशने ॥ ११ ॥

ददर्श पुरतो राजा रूपशीलगुणाकरम् ।
[7]पुलकाश्रुविधौतस्तं दृष्ट्वा साधु [8]समर्चयत् ॥ १२ ॥

ज्ञानागोचरमे[9]तन् मे तवा[10]गमनमीश्वरः ।
[11]यथा मान्धातृपुत्रस्य यदुनाथेन कानने ॥ १३ ॥

इत्युक्त्वा तं पूजयित्वा समानीय निजाश्रमे ।
हर्म्यप्रासादसंबाधे स्थापयित्वा ददौ [12]सुताम् ॥ १४ ॥

पद्मां पद्मपलाशाक्षीं [13]पद्मनेत्राय [14]पद्मिनीम् ।
[15]पद्मजादेशतः पद्मनाभायादाद् यथाक्रमम् ॥ १५ ॥

कल्किर्लब्ध्वा प्रियां [16]भार्यां सिंहले साधुसत्कृतः ।
[17]समुवास विशेषज्ञः समीक्ष्य द्वीपमुत्तमम् ॥ १६ ॥

---

१. घ सार्द्धं निजजनैः प्रभुः
२. क शुभ्र
३. क मणिवेदिकमासीनं
४. घ रुचिराण्यहो
५. ख घ पीतवासाग्रघोरभासा विभूषितम्
६. ख मदनोद्यान
७. घ साश्रुः सपुलकः श्रीशं
८. तमर्चयत्
९. ख एतद् वै
१०. ग भवदागमनं प्रभो
११. ग × यथा······कानने
१२. ख शुभाम्
१३. क पद्मनेत्रां च
१४. ख सुन्दरीम् , ग यशस्विनीम्
१५. ख पद्मयादेशितः
१६. ग पत्नीं
१७. ख सुप्रवास



राजानः स्त्रीत्वमापन्नाः [1]पद्मायाः सखितां गताः ।
[2]द्रष्टुं समीयुस्त्वरिताः कल्किं [3]विष्णुं जगत्पतिम् ॥ १७ ॥

ताः स्त्रियोऽपि [4]समालोक्य संस्पृश्य चरणाम्बुजम् ।
पुनः पुंस्त्वं समापन्ना रेवास्नानात् [5]तदाज्ञया ॥ १८ ॥

पद्माकल्की गौरकृष्णौ विपरीतान्तरावुभौ ।
वहिःस्फुटौ नीलपीतवासो व्याजेन पश्यतु ॥ १९ ॥

दृष्ट्वा प्रभावं कल्केस्तु [6]राजानः परमाद्भुतम् ।
प्रणम्य [7]भक्तिभावेन तुष्टुवुः शरणार्थिनः ॥ २० ॥

[8]जय जय निजमायया कल्पिताशेषविशेषकल्पनापरिणाम जलाप्लुतलोकत्रयोपकरणमाकलय्य मनुमनिशम्य पूरितम[9]विजनाविभूतमहामीनशरीर । त्वं निजकृतधर्मसेतुसंरक्षण[10]कृतावतारः ।

पुनरिह दितिजबलपरिलङ्घितवासववसूदनाधृतजितत्रिभुवन[11]पराक्रमो [12]हिरण्याक्षनिधनपृथिव्युद्धरणसंकल्पाभिनिवेशेन [13]धृतक्रोडावतारः [14]परितः पाहि नः ।

[15]पुनरिह जलधिमनादृतदेवदानवगणैर्मन्दराचलानयनव्याकुलितानां साहाय्येनादृतचित्तः पर्वतोद्धरणामृतप्राशनरचनावतारः-कूर्माकारः प्रसीद परेश त्वं दीननृपाणाम् ।

---

१. ग पत्न्याश्च
२. ख ग दर्शनं कामयामासुः
३. ख ग शान्तं
४. घ तमालोक्य
५. क तथाज्ञया
६. अन्ये च
७. ख घ परया भक्त्या
८. क ख + राजान ऊचुः
९. ख नारीजनाभिभूतमीनशरीर
१०. ख ग कृतावतार
११. घ पराक्रम
१२. ख हिरण्याक्षस्य
१३. घ धृतकोलावतारः
१४. ख ग घ ×
१५. ख × पुनरिह···साहाय्येन

पुनरिह त्रिभुवनजयिनो महाबलपराक्रमस्य [1]हिरण्यकशिपोरर्द्दितानां [2]देवप्रवराणां भयभीतानां कल्याणाय दितिसुत[3]वधप्रेप्सुर्ब्रह्मणो वरदानादवध्यस्य [4]न शस्त्रास्त्र रात्रिदिवास्वर्गमर्त्यपातालतले देवगन्धर्वकिन्नरनरनागैरिति विचिन्त्य नरहरिरूपेण नखाग्रभिन्नोरं [5]दष्टदन्तच्छदं त्यक्तासुं कृतवानसि ।

पुनरिह त्रिजगज्जयिनो बलेः [6]सत्रे शक्रानुजो [7]वटुवामनदैत्यसंमोहनाय त्रिपदभूमि[8]माक्रान्तच्छलेन विश्वकायस्तदुत्सृष्टजलसंस्पर्शविवृद्धमनोऽभिलाषस्तव भूतले बलेर्दौवारिकत्वमङ्गीकृतमुचितं दानफलम् ।

पुनरिह हैहयादिनृपाणाममितबलपराक्रमाणां नानामदोल्लङ्घितमर्यादावर्त्मनां निधनाय भृगुवंशजो जामदग्न्यः पितृहोमधेनु[9]हरणप्रवृद्धमन्युवशात् त्रिसप्तकृत्वो निःक्षत्रियां पृथिवीं [10]परशुरामावतारः ।

पुनरिह पुलस्त्यवंशावतंसस्य [11]विश्वश्रवसः पुत्रस्य निशाचरस्य [12]रावणस्य लोकत्रयतापनस्य निधनमुररीकृत्य रविकुलजातदशरथात्मजो विश्वामित्रादस्त्राण्युपलभ्य वने सीताहरणवशात् प्रवृद्धमन्युना अम्बुधिं वानरैर्निबध्य सगणं दशकन्धरं [13]रामावतारः हतवानसि ।

पुनरिह यदुकुल[14]जलधिकलानिधिः सकलसुरगणसेवितपादारविन्दद्वन्द्वः विविधदानवदैत्यदलनलोकत्रयदुरित[15]तापनो वसुदेवात्मजो रामावतारो बलभद्रस्त्वमसि ।

पुनरिह विधिकृतवेदधर्मानुष्ठानविहित[16]नानापशुनाशदर्शनघृणः

---

१. ख हिरण्यकशिपोरङ्गीकृतानां
२. घ देववराणां
३. ख वर
४. ख ×
५. ख ग संदष्ट
६. ख शक्त्यास्त्र
७. घ वटुवामनो
८. घ याच्ञा
९. ख हरणाय
१०. घ कृतवानसि परशुरामावतारः
११. घ विश्रवसः
१२. घ ×
१३. घ हतवानसिरामावतारः
१४. ख सजलधि
१५. ख नाशनो
१६. नानापशुदर्शनघृणः, घ नानादर्शनसघृणः



संसारकर्मत्यागविधिना [1]ब्रह्मभावविनाशचातुरीं प्रकृतिविमाननामसम्पादयन् बुद्धावतारस्त्वमसि ।

अधुना कलिकुलनाशावतारो बौद्धपाषण्डम्लेच्छादीनां च वेदधर्मसेतुपरिपालनाय कृतावतारः कल्किरूपेणास्मान् स्त्रीत्वनिरयादुद्धृतवानसि । तवानुकम्पां किमिह कथयामः ।

क्व ते ब्रह्मादीनामविदितविलासावतरणं
क्व नः कामा [2]रोमाकुलितमृगतृष्णार्त्तमनसाम् ।
सुदुष्प्राप्यं युष्मच्चरणजलजालोकनमिदं
कृपापारावारः प्रमुदितदृशाश्वासय निजान् ॥ २१ ॥

[3]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
नृपाणां स्तवो [4]नाम दशमोऽध्यायः[5] ॥

---

१. घ ब्रह्मासविलासचातुरी
२. घ वामा
३. क × इति श्री
४. ग × नाम
५. ग + समाप्तः

# एकादशोऽध्यायः

**सूत उवाच**

[1]श्रुत्वा नृपाणां भक्तानां वचनं पुरुषोत्तमः।
ब्राह्मणक्षत्रविट्शूद्रवर्णानां धर्ममाह यत् ॥ १ ॥
प्रवृत्तानां निवृत्तानां [2]कर्म यत् परिकीर्त्तितम्।
[3]सर्वं संश्रावयामास वेदानामनुशासनम् ॥ २ ॥
[4]इति कल्केर्वचः श्रुत्वा राजानो विशदाशयाः।
[5]प्रणिपत्य पुनः प्राहुः पूर्वां तु गतिमात्मनः ॥ ३ ॥
स्त्रीत्वं वाप्यथवा पुंस्त्वं कस्य वा केन वा कृतम्।
जरायौवनबाल्यादि सुखदुःखादिकं च यत् ॥ ४ ॥
कस्मात् कुतो वा कस्मिन् वा किमेतदिति वा विभो।
अनिर्णीतान्यविदितान्यपि कर्माणि [6]वर्णय ॥ ५ ॥
इति तेषां वचः श्रुत्वा कल्किः कमललोचनः।
[7]तेभ्यः प्रत्युत्तरं दातुं सस्मार निजसेवकम् ॥ ६ ॥
[8]सोऽप्यनन्तो मुनिवरस्तीर्थपादो बृहद्व्रतः।
कल्केर्दर्शनतो मुक्तिमाकलय्यागतस्त्वरन् ॥ ७ ॥
समागत्य [9]पुनः प्राह किं करिष्यामि कुत्र वा।
[10]यास्मामीति वचः श्रुत्वा कल्किः [11]प्राह हसन् मुनिम् ॥ ८ ॥

१. ख ग नृपाणां च स्तवं श्रुत्वा प्रसन्नात्मा जगत्पतिः
२. क धर्मं
३. क सर्वं तत्
४. क तथा कल्किवचः
५. ख पुनः प्राहुर्यथापूर्वमात्मनां परमां गतिम्
६. क वर्त्तयन्
७. क घ × तेभ्यः……निजसेवकम्
८. घ + तदा तदाकर्ण्य कल्किरनन्तं मुनिमस्मरत्
९. ख पुरः
१०. ग यास्यामि वचनं
११. ग प्रोवाच सस्मितम्



[1]कृतं दृष्टं त्वया ज्ञातं सर्वं याह्यनिवर्तकम्।
अदृष्टमकृतं चेति श्रुत्वा [2]स्मेरमुखो मुनिः ॥ ९ ॥
गमनायोद्यतं [3]दृष्ट्वा नृपास्तु विमलाशयाः।
[4]कल्किं कमलपत्राक्षं प्रोचुर्विस्मितचेतसः ॥ १० ॥

[5]राजान ऊचुः

[6]किमनेनापि कथितं त्वया वा किमुतान्युत।
सर्वं तच्छ्रोतुमि[7]च्छामः कथोपकथनं द्वयोः ॥ ११ ॥
[8]नृपाणां तद् वचः श्रुत्वा तानाह मधुसूदनः।
पृच्छतामुं मुनिं [9]शान्तं कथोपकथनादृतः ॥ १२ ॥
[10]इति कल्केर्वचो भूयः श्रुत्वा ते नृपसत्तमाः।
अनन्तमाहुः प्रणताः प्रश्नपारतितीर्षवः ॥ १३ ॥
[11]मुने किमत्र कथनं कल्किना [12]धर्मवर्मणा।
[13]अबोधः केन वा जातस्तत्त्वं वर्णय नः प्रभो ॥ १४ ॥

मुनिरुवाच

पुरिकायां [14]पुर्यां च पिता मे वेदपारगः।
[15]विद्रुमो नाम धर्मज्ञः ख्यातः परहिते रतः ॥ १५ ॥

१. ख ग कृते दृष्टे स्वयं ज्ञातं
२. घ हृष्टमना
३. घ तं तु दृष्ट्वा नृपगणास्ततः
४. ग प्रोचुः कमलपत्राभं विस्मयापन्नचेतसः
५. ख × राजान ऊचुः
६. ख किमनेनाभि
७. ख इच्छामि
८. ख ग तेषामित्थं
९. ग दान्तं
१०. ग × इति…… तितीर्षवः
११. ख घ + राजान ऊचुः
१२. ख धर्मशर्मणा
१३. क निःसंशयं यथा नः स्यात्तथा वक्तव्यमादरात्, घ दुर्बोधः
१४. घ पुरि पुरा
१५. ख ग विक्रमो

[1]सोमा मम विभो माता पतिधर्मपरायणा।
तयोर्वयः[2]परिणतौ काले षण्डाकृतिस्त्वहम् ॥ १६ ॥
संजातः शोकदः पित्रोर्लोकानां निन्दिताकृतिः।
[3]समालोक्य पिता क्लीवं दुःखशोक[4]समाकुलः ॥ १७ ॥
त्यक्त्वा [5]गृहं शिववनं गत्वा तुष्टाव शङ्करम्।
[6]संपूज्येशं विधानेन धूपदीपानुलेपनैः ॥ १८ ॥

[7]विद्रुम उवाच

शिवं शान्तं सर्वलोकैकनाथं भूतावासं वासुकीकण्ठभूषम्।
जटाजूटबद्धगङ्गातरङ्गं वन्दे सान्द्रानन्दसन्दोहदक्षम् ॥ १९ ॥
[8]इत्यादिबहुभिः स्तोत्रैः स्तुतः स [9]वरदां वरः।
वृषारूढः प्रसन्नात्मा पितरं प्राह मे [10]वृणु ॥ २० ॥
[11]विद्रुमो मे पिता प्राह मत्पुंस्त्वं तापतापितः।
हसञ्छिवो ददौ [12]तस्मै पुंस्त्वं सुखकरं भुवि ॥ २१ ॥
मम पुंस्त्वं वरं लब्ध्वा [13]समायातो गृहं पिता।
पुरुषं मां समालोक्य [14]प्रसन्नात्मा बभूव सः ॥ २२ ॥
ततः [15]प्रवयसो स तु पिता च द्वादशाब्दके।
[16]कारयित्वा विवाहं मे मोदं लेभे यथायथम् ॥ २३ ॥

१. ख स मे मम पिता
२. क परिणामे
३. घ मामालोक्य
४. घ भयाकुलः
५. ख गेहं शिववरं
६. ख संपूज्य तं
७. ख ग ×
८. ख इत्यादिस्तोत्रसंस्तुतः स शिवो वरदां यरः
९. घ शिवदः शिवः
१०. ख शृणु
११. ख ग विक्रमो
१२. घ पुंस्त्वं पार्वत्या प्रतिमोदितः
१३. घ पितायातः पुनर्गृहम्
१४. घ सहर्षः प्रियया सह
१५. घ प्रवयसो तौ तु पितरौ
१६. घ विवाहं मे कारयित्वा बन्धुभिर्मुदमापतुः



यज्ञरातसुतां पत्नीं [1]मानिनीं रूपशालिनीम्।
प्राप्याहं परितुष्टात्मा गृहस्थः स्त्रीवशोऽभवम् ॥ २४ ॥
ततः कतिपये काले [2]पिता मे च मृतो नृपाः।
पारलौकिककार्याणि [3]पुरोहिद्ब्राह्मणैर्वृतः ॥ २५ ॥
तस्य कृत्वा विधानेन [4]भोजयित्वा द्विजान् बहून्।
[5]पितृवियोगतप्तोऽहं विष्णुसेवापरोऽभवम् ॥ २६ ॥
तुष्टो हरिर्मे भगवाञ्जपपूजादिकर्मभिः।
स्वप्ने मामाह मायेयं स्नेहमोहविनिर्मिता ॥ २७ ॥
अयं [6]पितेति भावना ममताकुलचेतसाम्।
शोकदुःखभयोद्वेगजरामृत्यु[7]विधायिका ॥ २८ ॥
श्रुत्वेति वचनं [8]विष्णोः [9]प्रतिवादार्थमुद्यतम्।
मामालक्ष्यान्तर्हितः स विनिद्रोऽहं ततोऽभवम् ॥ २९ ॥
सविस्मयः सभार्योऽहं त्यक्त्वा [10]स्वां पुरिकां पुरीम्।
पुरुषोत्तमाख्यं श्रीविष्णोरालयं चागमं [11]नृपाः ॥ ३० ॥
[12]तस्यैव दक्षिणे पार्श्वे निर्माय्याश्रममुत्तमम्।
सभार्यः सानुगामात्यः करोमि हरिसेवनम् ॥ ३१ ॥
मायासंदर्शनाकाङ्क्षी हरिस[13]द्मनि संस्थितः।
[14]गायन् नृत्यञ्जपन्नाम चिन्तयन् शमनापहम् ॥ ३२ ॥

१. क भामिनीं
२. घ पितरौ मे मृतौ नृपाः
३. सुहृद्भिः
४. क जपपूजादिकर्मभिः
५. घ पित्रोः
६. घ पितेयं मातेति
७. ख ग विधायिनी
८. ख ग तस्य
९. क आलयं चागमन्नृप
१०. घ तां
११. क द्रुतम्
१२. घ तत्रैव
१३. क हरिपदमेषु
१४. क × गायन्'' पारणादिने

एवं वृत्ते द्वादशाब्दे द्वादश्यां पारणादिने ।
स्नातुकामः समुद्रेऽहं बन्धुभिः सहितो गतः ॥ ३३ ॥

तत्र मग्नं जलनिधौ लहरीलोल[1]संकुले ।
समुत्थातुमशक्तं मां प्रतुदन्ति जलेचराः ॥ ३४ ॥

[2]निमज्जनोन्मज्जनेन व्याकुलीकृतचेतसम् ।
जलहिल्लोलमिलनदलिताङ्गमचेतनम् ॥ ३५ ॥

[3]जलधेर्दक्षिणे कूले पतितं [4]पवनेरितम् ।
मां तत्र [5]पतितं दृष्ट्वा वृद्धशर्मा द्विजोत्तमः ।
[6]शङ्कामपास्य सघृणः स्वपुरं मां समानयत् ॥ ३६ ॥

स वृद्धशर्मा धर्मात्मा पुत्रदारधनान्वितः ।
कृत्वारुग्नं तु मां तत्र पुत्रवत् पर्यपालयत् ॥ ३७ ॥

अहं तत्र दीनात्मा दिग्देशाभिज्ञ [7]एव न ।
दम्पतीं तौ स्पपितरौ [8]मत्वा तत्रावसं नृपाः ॥ ३८ ॥

स मां विज्ञाय बहुधा [9]वेदधर्मेष्वनुष्ठितम् ।
प्रददौ स्वां दुहितरं [10]विवाहेषु समुत्सुकः ॥ ३९ ॥

लब्ध्वा [11]स्वर्णविमण्डितां रूपशीलगुणान्विताम् ।
नाम्ना चारुमतीं तत्र [12]मानिनी विस्मितोऽभवम् ॥ ४० ॥

---

१. क ख संचिते
२. क निमज्जने, घ निमज्जनो मज्जनेन
३. क उदधे
४. क पर्वतेरितम्
५. क पितरं
६. घ सन्ध्यामुपास्य
७. क आकुलः, ख एकलः
८. क सह
९. क वेदधर्मेषु व्यापृतम्
१०. घ विवाहे विनयान्वितः
११. घ चामीकराकारां
१२. क भामिनीं



[1]तयाहं परितुष्टात्मा नानाभोग[2]सुखान्वितः ।
जनयित्वा पञ्चपुत्रान् [3]श्रीमदेनावृतोऽभवम् ॥ ४१ ॥

जयश्च विजयश्चैव कमलो विमलस्तथा ।
बुध इत्यादयः पञ्च विदितास्तनया मम ॥ ४२ ॥

स्वजनैर्बन्धुभिः पुत्रैर्धनैर्नानाविधैर[4]हम् ।
विदितः पूजितो लोके [5]देवैरिन्द्रो यथा दिवि ॥ ४३ ॥

बुधस्य ज्येष्ठपुत्रस्य विवाहार्थं समुद्यतम् ।
[6]सन्तुष्टात्मा द्विजो दृष्ट्वा धर्मसारो निजाम् सुताम् ॥ ४४ ॥

दित्सुः कर्माणि [7]वेदज्ञश्चकाराभ्युदयान्यपि ।
[8]वाद्यैर्गीतैश्च नृत्यैश्च स्त्रीगणैः स्वर्णभूषितैः ॥ ४५ ॥

[9]अहं च पुत्राभ्युदये [10]पितृदेवर्षितर्पणम् ।
कर्तुं समुद्रवेलायां प्रविष्टः परमादरात् ॥ ४६ ॥

[11]वेलालोलायिततनुर्जलादुत्थाय सत्वरः ।
तीरे सखीन् स्नानसन्ध्यापरान् वीक्ष्याह[12]मुन्मनाः ॥ ४७ ॥

सद्यः समभवं भूपाः [13]द्वादश्यां पारणादृतान् ।
[14]पुरषोत्तम[15]संवासान् विष्णुसेवार्थमुद्यतान् ॥ ४८ ॥

[16]तेऽपि मामग्रतः कृत्वा तद्रूपवयसां निधिम् ।
विस्मयाविष्टमनसं दृष्ट्वा मामब्रुवन् जनाः ॥ ४९ ॥

---

१. क तया हि
२. ख समन्वितः
३. घ संमदेन
४. ख अपि
५. क देव इन्द्रो
६. घ दृष्ट्वा द्विजवरस्तुष्टो
७. क वेदज्ञैः
८. क वाद्यैश्च गीतनृत्यैश्च
९. ख सोऽहं
१०. ख देवर्षिपितृ
११. क वेलालोलायततनुः
१२. ख ग मन्मनाः
१३. ख ×
१४. क पुरुषोत्तमसंज्ञं तं दृष्ट्वा मामब्रुवन् जनाः ।
१५. ग संवासः
१६. क × तेऽपि…जनाः

[1]अनन्त [2]विष्णुभक्तोऽसि जले किं [3]दृष्टवानिह ।
स्थले वा [4]व्यग्रमनसं लक्षयामः कथं तव ॥ ५० ॥

पारणं कुरु तद् ब्रूहि त्यक्त्वा विस्मयमात्मनः ।
तानब्रुवमहं नैव किञ्चिद् दृष्टं श्रुतं जनाः ॥ ५१ ॥

[5]कामात्मा तत्कृपणधीर्मायासन्दर्शनादृतः ।
तया हरेर्माययाहं मूढो [6]व्याकुलितेन्द्रियः ॥ ५२ ॥

न शर्म [7]वेद्मि कुत्रापि स्नेहमोहवशं गतः ।
आत्मनो विस्मृतिरियं [8]को वेद विदितां तु ताम् ॥ ५३ ॥

[9]इति भार्याधनागारपुत्रोद्वाहानुरक्तधीः ।
अनन्तोऽहं दीनमना न जाने स्वापसम्मितम् ॥ ५४ ॥

[10]मां वीक्ष्य मानिनी भार्या विवशं मूढवत् स्थितम् ।
[11]क्रन्दन्ती किमहोऽकस्मादालपन्ती ममान्तिके ॥ ५५ ॥

[12]इह तां वीक्ष्य तांस्तत्र [13]स्मृत्वा कातरमानसम् ।
[14]हंसोऽप्येको [15]बोधयितुमागतो मां सदुक्तिभिः ।
धीरो विदितसर्वार्थः पूर्णः परमधर्मवित् ॥ ५६ ॥

---

१. ख × अनन्त···व्याकुलितेन्द्रियः(५२)
२. क विष्णुभक्तस्त्वं
३. ग दृष्टवानसि
४. क व्यग्रसन्नम्
५. क मन्दात्मा
६. क व्याकुलितं मनः
७. ख लेभे
८. क. मूलको वेदितात्तु ताम्
९. क इति भार्या पुत्रगणं विवाहे मूढवत् स्थितम्
१०. ख मामन्वीक्ष्य प्रिया
११. क. क्रन्दन्ति किमहो कस्मादालप्रन्ति
१२. क इहेमां विस्मृति
१३. क. स्मृत्या
१४. क हंसस्त्वेको
१५. क बोधयितुं स्वागतो



[1]सूर्याकारं तत्त्वसारं [3]प्रशान्तं
दान्तं शुद्धं लोकशोकक्षयिष्णुम् ।
ममाग्रे तं पूजयित्वा मदङ्गाः
[2]पप्रच्छुस्ते [4]मच्छुभध्यानकामाः ॥ ५८ ॥

[5]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
मायादर्शनं [6]नामैकादशोऽध्यायः[7]

---

१. क सूर्याकारं तत्त्वसारं महान्तं शान्तं बुद्धलोकक्षयिष्णुं
२. क पप्रच्छुमध्यानकामा
३. ख महान्तं
५. क × इति श्री
४. ग मत्सुत
७. ग + समाप्तः
६. ग × नाम

# द्वादशोऽध्यायः

## सूत उवाच

उपविष्टे तदा [1]हंसे भिक्षां कृत्वा [2]यथोचिताम्।
ततः प्राहुरनन्तस्य शरीरारोग्य[3]काम्यया ॥ १ ॥
हंसस्तेषां [4]मतं ज्ञात्वा प्राह मां पुरतः स्थितम्।
तव चारुमती भार्या पुत्राः पञ्च बुधादयः ॥ २ ॥
[5]धनरत्नाचितं सद्म [6]सम्बाधं सौधसंकुलम्।
[7]त्यक्त्वा कदागतोऽसीह पुत्रोद्वाहदिने न तु ॥ ३ ॥
समुद्रवीरसंचारः [8]पुराद्धर्मजनादृतः ।
[9]निमन्त्र्य मामिहायातः शोक[10]सन्तप्तमानसः ॥ ४ ॥
त्वं च सप्ततिवर्षीयस्तत्र दृष्टो मया प्रभो।
त्रिंशद्वर्षीयवत् [11]कस्मादिति मे संभ्रमो महान् ॥ ५ ॥
[12]इयं भार्या सहाया ते न तत्रालोकिता क्वचित्।
अहं वा क्व कुतस्तस्मात् कथं वा केन [13]पालितः ॥ ६ ॥
[14]स एव वा न वापि त्वं नाहं वा भिक्षुरेव सः।
आवयोरिह संयोगश्चेन्द्रजाल इवाभवत् ॥ ७ ॥

१. ख कृत्वा हंसे भिक्षां
२. ख ग यथोचितम्
३. ख कामया
४. ख मनो
५. घ धनरत्नान्वितं
६. ख सद्यैव
७. क दृष्ट्वा
८. क पुरादन्यजनाहृतः
९. क ग आमन्त्र्य
१०. घ संविग्न
११. ग कर्मादिति
१२. क इमं भार्यां
१३. ख प्रापितः, घ काशितः
१४. क स एवं वीक्षयित्वा



[1]त्वं गृहस्थः स्वधर्मज्ञो भिक्षुकोऽहं परात्मकः।
आवयोरिह [2]संयोगो बालकोन्मत्तयोरिव ॥ ८ ॥
तस्मादीशस्य मायेयं त्रिजगन्मोहकारिणी।
[3]ज्ञानात् प्राप्याद्वैतलभ्या मन्येऽहमिति भो द्विज ॥ ९ ॥
इति भिक्षुः समाश्राव्य यदन्यत् प्राह विस्मितः।
मार्कण्डेय महाभाग भविष्यं कथयामि [4]तत् ॥ १० ॥
प्रलये या त्वया दृष्टा [5]पुरुषस्योदरम्भसि।
सा माया मोहजनिका [6]पान्थानां गणिका यथा ॥ ११ ॥
[7]तमोह्यनन्तसन्तापा नोदनोद्यतमक्षरी।
ययेदमखिलं लोकमावृत्यावस्थया[8]स्थितम् ॥ १२ ॥

## [9]हंस उवाच

लये लीने त्रिजगति ब्रह्मतन्मात्रतां गतः।
निरुपाधौ निरालोके सिसृक्षुरभवत् [10]परः ॥ १३ ॥
[11]ब्रह्मण्यपि द्विधाभूते पुरुषप्रकृती [12]त्वया।
[13]मासा संजनयामास महान्तं कालयोगतः ॥ १४ ॥
कालस्वभावकर्मात्मा सोऽहङ्कारस्ततोऽभवत्।
[14]त्रिवृद्विष्णुशिवब्रह्ममयः [15]संसारकारणम् ॥ १५ ॥

१. भवान् गृही
२. घ संवादो
३. ख ज्ञानं
४. घ ते
५. क पुरुषस्योदरे असि
६. घ पन्थानं
७. क तामाह्यानन्तसंताप
८. क स्थिता
९. घ ×
१०. ग पुरा
११. क ब्रह्मणा बुद्धिदानार्थे
१२. क मया
१३. क भासं, ख भाषां
१४. क त्रिवद्धब्रह्म
१५. ख संसारकारकः

तन्मात्राणि ततः पञ्च जज्ञिरे गुणवन्ति च ।
[1]महाभूतान्यपि ततः [2]प्रकृतौ ब्रह्मसंश्रयात् ॥ १६ ॥
जाता देवासुरनरा ये चान्ये जीवजातयः ।
ब्रह्माण्डभाण्डसंभार[3]जन्मनाश[4]क्रियात्मिका ॥ १७ ॥
[5]मोदेन मायया जीवपुरुषः [6]परमात्मनः ।
संसारशरणव्यग्रो न वेदात्मगतिं क्वचित् ॥ १८ ॥
अहो बलवती माया ब्रह्माद्या यद्वशे स्थिताः ।
गावो यथानसि प्रोता गुणबद्धाः खगा इव ॥ १९ ॥
तां मायां [7]ज्ञानतर्यां ये तितीर्षन्ति मुनीश्वराः ।
[8]स्त्रवन्तीं [9]वासनानक्रां त एवार्थविदो भुवि ॥ २० ॥

**शौनक उवाच**

मार्कण्डेयो वसिष्ठश्च वामदेवादयोऽपरे ।
श्रुत्वामृत[10]वचो भूयः किमाहुः श्रवणादृताः ॥ २१ ॥
राजानोऽनन्तवचनमिति श्रुत्वा सुधोपमम् ।
[11]किं वा प्राहुरहो सूत भविष्यमिह वर्णय ॥ २२ ॥
इति तद्वच आश्रुत्य सूतः सत्कृत्य तं पुनः ।
कथयामास कार्त्स्न्येन शोकमोहविघातकम् ॥ २३ ॥

**सूत[12] उवाच**

तत्रानन्तो भूपगणैः पृष्टः प्राह कृतादरः ।
तपसा मोहनिधनमिन्द्रियाणां च निग्रहम् ॥ २४ ॥

---

१. ग महाभूतान्यपतितः
२. क प्रकृतः
३. ख जन्मना सत्क्रियात्मिकाः
४. क क्रियात्मकः
५. मायया जीवेन, घ मायया मायया
६. क परमात्मनाम्
७. घ गुणमय्यां
८. क अवन्ति, ख स्मरन्ति
९. क वासनाक्रान्तं, ख वासनानन्तं
१०. क शुकवचः, घ गुरुवचो
११. क किं वः
१२. ग ×



**[1]अनन्त उवाच**

[2]अतोऽहं वनमासाद्य तपः कृत्वा विधानतः ।
नेन्द्रियाणां न मनसो विग्रहोऽभूत् [3]कदाचन ॥ २५ ॥
वने ब्रह्म ध्यायतो मे भार्यापुत्रधनादिकम् ।
विषयश्चान्तरा शश्वत् संस्मारयति मे मनः ॥ २६ ॥
तेषां स्मरणमात्रेण दुःखशोकभयादयः ।
[4]प्रतुदन्ति मम प्राणान् धारणाध्याननाशकाः ॥ २७ ॥
ततोऽहं निश्चितमतिरिन्द्रियाणां च [5]निग्रहे ।
[6]मनसो निग्रहस्[7]तेन भविष्यति न संशयः ॥ २८ ॥
अतो मामिन्द्रियाणां च [8]निग्रहव्यग्रचेतसम् ।
तदधिष्ठातृदेवाश्च दृष्ट्वा मामीयुरञ्जसा ॥ २९ ॥
रूपिणो मामथोचुस्ते भोऽनन्त इति ते दश ।
दिग्वातार्कप्रचे[9]तोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥
इन्द्रियाणां वयं [10]देवास्तव देहे प्रतिष्ठिताः ।
नखाग्रकाण्डसंभिन्नान्नास्मान् कर्तुमिहार्हसि ॥ ३१ ॥
न श्रेयो [11]हि तवानन्त [12]मनोनिग्रहकर्मणि ।
छेदने भेदनेऽस्माकं [13]भिन्नमर्मा मरिष्यसि ॥ ३२ ॥
अन्धानां बधिराणां च विकलेन्द्रियजीविनाम् ।
[14]वनेऽपि विषयव्यग्रं मानसं लक्षयामहे ॥ ३३ ॥

---

१. ग ×
२. ख ततो
३. क कथञ्चन
४. क प्रदीयंते
५. घ घातने
६. ख मनसां
७. ख तर्हि
८. ख निराकरणव्यापृतं
९. ख पुस्तिकायां इतः ऊर्ध्वं न किञ्चिदस्ति, अत्रैवावसीयते
१०. ग कर्ता तव
११. क न
१२ क भ्रमो निग्रहकर्मणि
१३. ग सिद्धकर्मा
१४. क ग वनेषु

जीवस्यापि गृहस्थस्य [1]देहो गेहं मनोऽनुगः ।
बुद्धिर्भार्या तदनुगा वयमित्यवधारय ॥ ३४ ॥
कर्मयत्तस्य जीवस्य मनो बन्धविमुक्तिकृत् ।
संसारयति लुब्धस्य [2]ब्रह्मणो यस्य मायया ॥ ३५ ॥
तस्मान् मनोनिग्रहार्थं विष्णुभक्तिं समाचर ।
[3]सुखमोक्षप्रदा नित्यं दाहिका सर्वकर्मणाम् ॥ ३६ ॥
द्वैताद्वैतप्रदानन्दसन्दोहा हरिभक्तिका ।
[4]हरिमन्त्रैर्जीवलोकविनाशस्ते महामते ॥ ३७ ॥
परं [5]प्राप्स्यति निर्वाणं कल्केरालोकनात् त्वया ।
इत्यहं [6]बोधितस्तेन भक्त्या संपूज्य केशवम् ॥ ३८ ॥
[7]कल्किं दिदृक्षुरापातः कृष्णं कलिकुलान्तकम् ।
दृष्टं रूपमरूपस्य स्पृष्टस्त[8]त्पदपल्लवः ॥ ३९ ॥
अपदस्य श्रुतं वाक्यमवाच्यस्य परात्मनः ।
इत्यनन्तः [9]प्रसन्नात्मा नारायणं कृपालयम् ॥ ४० ॥
कल्किं कमलपत्राक्षं नमस्कृत्य ययौ मुनिः ।
राजानो [10]मुनिवाक्येन विवीर्णपदवीं गताः ॥ ४१ ॥
[11]पद्मां प्रणम्य कल्किं च प्रययुः स्वनिकेतनम् ।
कल्किमभ्यर्च्य पद्मां च नमस्कृत्य मुनिव्रताः ॥ ४२ ॥

---

१. क देहे गेहे
२. क ब्रह्मणोंऽशस्य
३. क + संसारकर्मजीवानां सुप्तानामिह नाशिनी ।
आधिव्याधि ग्रहोन्मादपापतापलता ततः ॥
भविता कैतवोन्मूलोन्मीलिनी विष्णुभक्तिका ।
४. घ हरिभक्त्या जीवकोषविनाशान्ते
५. क पवित्रं निर्भावं कल्केरालोकनाज्ञया
६. क बोधितस्तैस्तु
७. क भक्त्या
८. क के पादपल्लवः
९. घ प्रमुदितः पद्मानाथं निजेश्वरम्
१०. ग तेन वाक्येन
११. घ कल्किमभ्यर्च्य पद्मां च नमस्कृत्य मुनिव्रताः



## शुक[1] उवाच

अनन्तस्य कथामेतामज्ञानध्वान्तनाशिनीम् ।
मायानियन्त्रीं प्रपठन् शृ[2]ण्वन् बन्धाद् विमुच्यते ॥ ४३ ॥
संसाराब्धि[3]विनाशलालसमतिः श्रीविष्णुसेवादरो ।
भक्त्याख्यानमिदं स्वभेदरहितं निर्माय [4]धर्मात्मना ॥
[5]ज्ञानोल्लासनिशातखड्गमुदितः सद्भक्तिदुर्गाश्रयः ।
षड्वर्गं जयतादशेषजगतामात्मस्थितं वैष्णवः ॥ ४४ ॥

[6]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये-
ऽनन्तमायानिरूपणं नाम द्वादशोऽध्यायः

---

१. घ ×
२. क वीक्ष्य
३. घ विलास
४. क वर्त्मात्मना
५. क कालोल्लास
६. क × इति श्री
७. ग × नाम
८. ग + समाप्तः

# त्रयोदशोऽध्यायः

## [1]सूत उवाच

गते नृपगणे कल्किः पद्मया सह सिंहलात् ।
शम्भलग्रामगमने मतिं चक्रे स्वसेनया ॥ १ ॥
ततः [2]कल्केरभिप्रायं [3]विदित्वा वासवस्त्वरन् ।
विश्वकर्माणमाहूय वचनं चेदमब्रवीत् ॥ २ ॥

## [4]इन्द्र उवाच

विश्वकर्मञ्छम्भले त्वं [5]गृहोद्यानेषु निष्कुटम् ।
प्रासादहर्म्यसंबाधं रचय स्वर्णसञ्चयैः ॥ ३ ॥

रत्नस्फटिकवैदूर्यनानामणिविनिर्मितैः ।
तत्रैव शिल्पनैपुण्यं तव यच्चास्ति तत् कुरु ॥ ४ ॥

श्रुत्वा हरे[6]र्वचो विश्वकर्मा शर्म निजं स्मरन् ।
[7]शम्भले कमलेशस्य स्वस्त्यादिप्रमुखान् गृहान् ॥ ५ ॥

नानावनलतोद्यानसरोवापीसुशोभितः ।
शम्भलश्चाभवत् कल्केर्यथेन्द्रस्यामरावती ॥ ६ ॥

[8]कल्किस्तु सिंहलाद् द्वीपाद् वहिः सेनागणैर्वृतः ।
त्यक्त्वा कारुमतीं कूले [10]पाथोधेरकरोत् स्थितिम् ॥ ७ ॥

१. ग × सूत उवाच
२. ग तस्य
३. ग विज्ञाय वासवो द्रुतम्
४. क ×
५. घ गृहोद्यानाट्टघट्टितम्
६. क वाचो
७. क शम्भलेशस्य स्वस्तिकमुखान् व्यरचत् सुन्दरान् गृहान्
८. घ + हंसीसहसुपर्णादिमुखाश्चक्रे सविश्वकृत् । उपर्युपरितापघ्नवातायनमनोहरान् ॥
९. क सिंहलपुराद्वहिः
१०. क सपाधेः करोस्थितः



बृहद्रथस्तु कौमुद्या सहितः स्नेहकातरः ।
पद्मया सहितायास्मै पद्मानाथाय [3]विष्णवे ॥ ८ ॥
ददौ गजानामयुतं लक्षं मुख्यं च वाजिनाम् ।
रथानां च द्विसाहस्रं दासीनां द्वे शते [1]मुदा ॥ ९ ॥

दत्त्वा वासांसि रत्नानि भक्तिस्नेहाश्रुलोचनः ।
[2]तयोर्मुखावलोकेन नाशकत् कियदीरितुम् ॥ १० ॥
[3]मोहाविष्टौ दम्पती तौ प्रस्थाप्य पुनरागतौ ।
पूजितौ कल्किपद्माभ्यां निज[4]कारुमतीं पुरीम् ॥ ११ ॥

कल्किस्तु [5]जलधेरम्भो विगाह्य पृतनागणैः ।
पारं जिगमिषुं दृष्ट्वा [6]जम्बुकं स्तम्भितोऽभवत् ॥ १२ ॥
जलस्तम्भमथालोक्य कल्किः सबलवाहनः ।
प्रययौ पयसां राशेरुपरि श्रीनिकेतनः ॥ १३ ॥

गत्वा पारं शुकं प्राह याहि मे शम्भलालयम् ।
विश्वकर्मकृतं यत्र देवराजाज्ञया बहु ॥ १४ ॥
[7]सद्म संबाधममलं [8]महार्हं च सुशोभनम् ।
[9]तत्रापि पित्रोर्ज्ञातीनां स्वस्ति [10]ब्रूया यथोचितम् ॥ १५ ॥
[11]यदत्राङ्ग विवाहादिसर्वं वक्तुं त्वमर्हसि ।
पश्चाद् यामि कृतस्वेतैस्त्वमादौ याहि शम्भलम् ॥ १६ ॥
[12]कल्केर्वचनमाकर्ण्य कीरो धीरस्ततो ययौ ।
[13]आकाशगामी सर्वज्ञः शम्भलं [14]सुरसुन्दरम् ॥ १७ ॥

१. क तथा
२. घ तयोर्मुखालोकनेन
३. घ महाविष्णु
४. क निजाम्
५. क जलधेरन्तो
६. क वरुणः
७. क पद्मा
८. ग घ मत्प्रियार्थं
९. ग तत्र पित्रोश्च
१०. क ब्रूयाद्यथोचितम्
११. क यत्नादङ्ग विदित्वा तु
१२. क वचः समाकर्ण्य
१३. क आकाशयानयोगेन
१४. घ सुरपूजितम्

सप्तयोजनविस्तीर्णं चातुर्वर्ण्यजनाकुलम् ।
सूर्यरश्मिप्रतीकाशं प्रासादशतशोभितम् ॥ १८ ॥

सर्वर्तु सुखदं रम्यं शम्भलं विह्वलोऽविशत् ।
गृहाद् गृहान्तरं [1]दृष्ट्वा प्रासादापि [2]चाम्बरम् ॥ १९ ॥

वनाद् वनान्तरं [3]तत्र वृक्षाद् वृक्षान्तरं व्रजन् ।
शुकः स विष्णुयशसः सदनं मुदितोऽव्रजत् ॥ २० ॥

तं गत्वा रुचिरालापैः कथयित्वा [4]प्रियां कथाम् ।
कल्केरागमनं प्राह सिंहलात् पद्मया सह ॥ २१ ॥

[5]सत्वरं तु विष्णुयशाः [6]समानाय्य प्रजाजनान् ।
विशाखयूप[7]भूपालं कथयामास हर्षितः ॥ २२ ॥

स राजा कारयामास पुरग्रामादि[8]मण्डितम् ।
स्वर्णकुम्भैः सदम्भोभिः पूरितैश्च[9]न्दनोक्षितैः ॥ २३ ॥

कालागुरुसुगन्धाढ्यैर्दीपलाजाङ्कुराक्षतैः ।
[10]कुसुमैः सुकुमारैश्च रम्भापूगफलै[11]रन्वितैः ॥ २४ ॥

शुशुभे शम्भलग्रामो विबुधानां मनोहरः ।
तं कल्किः प्राविशद् भीमसेनागणविलक्षणः ॥ २५ ॥

कामिनी नयनानन्दमन्दिराङ्गः कृपानिधिः ।
पद्मया सहितः पित्रोः [12]पदयोः प्रणतोऽपतत् ॥ २६ ॥

---

१. ग गत्वा
२. क चान्तरम्
३. क चान्ये
४. ग घ प्रियाः कथाः
५. घ ततस्त्वरन्
६. घ समानार्यं
७. क भूपालान्
८. क मण्डलम्
९. ग चन्दनोक्षितैः
१०. क कुसुमाकारैः
११. घ फलाश्रितैः
१२. क पादयोः



सुमतिर्मुदिता पुत्रं स्नुषां शक्रं शचीमिव ।
ददृशे [1]त्वमरावत्यां पूर्णकामा [2]दितिः सती ॥ २७ ॥

शम्भलग्रामनगरी पताका ध्वजशालिनी ।
[4]अवरोधसुजघना [5]प्रासादविपुलस्तनी ॥ २८ ॥

मयूरचूचकाहंससङ्घहारमनोहरा ।
पटवासोद्योतधूमवसना कोकिलस्वना ॥ २९ ॥

सहासगोपुरमुखी [7]वामनेत्रा यथाङ्गना ।
कल्किं पतिं गुणवती प्राप्य रेजे तमीश्वरम् ॥ ३० ॥

[8]स रेमे पद्मया तत्र [9]वर्षयुगानजाश्रयः ।
शम्भले [10]विह्वलाकारः कल्किः [11]कल्कविनाशनः ॥ ३१ ॥

कवेः [12]पत्नी कामकला सुषुवे [13]परमेष्ठिनौ ।
बृहत्कीर्त्तिबृहद्बाहू [14]महाबलपराक्रमौ ॥ ३२ ॥

[15]प्राज्ञस्य सन्नतिर्भार्या तस्यां पुत्रो बभूवतुः ।
[16]यज्ञविदौ सर्वलोकपूजितौ विजितेन्द्रियौ ॥ ३३ ॥

सुमन्त्रकस्तु मालिन्यां जनयामास शासनम् ।
वेगवन्तं च साधूनां द्वावेतावुपकारकौ ॥ ३४ ॥

ततः कल्किश्च पद्मायां जयो विजय एव च ।
द्वौ पुत्रौ जनयामास लोकख्यातौ [17]महाबलौ ॥ ३५ ॥

---

१. क स्वामरावत्याम्
२. क पूर्णकामादिभिः
३. क मालिनी
४. क रेवारोधः
५. ग प्रासादैर्विपुलाकृतिः
६. क संघहारामनोहरा
७. क मणिनेत्रा यथाङ्गती
८. ग तत्र रेमे बहून् कालान्
९. घ वर्षपूगान्
१०. ग विमलानन्दः
११. क किल
१२. ग भार्या कामरसा
१३. क परमूर्जितौ
१४. क महाभुज
१५. क प्रज्ञस्य
१६. घ यज्ञविज्ञौ
१७. क महाभुजौ

एतैः परिवृतोऽमात्यैः सर्वसम्पत्समन्वितौ ।
[1]हयमेधविधानार्थमुद्यतं पितरं प्रभुः ॥ ३६ ॥
समीक्ष्य कल्किः प्रोवाच पितामहमिवे[2]श्वरः ।
[3]दिक्पतींश्च विजित्याहं [4]धनान्याहृत्य [5]इत्युत ॥ ३७ ॥
[6]हयमेधं करिष्यामि यास्यामि दिग्जयाय च ।
इति प्रणम्य तं [7]प्रीत्या कल्किः परपुरञ्जयः ॥ ३८ ॥
सेनागणैः परिवृतः प्रययौ [8]कीकटं पुरम् ।
बुद्धालयं सुविपुलं वेदधर्मबहिष्कृतम् ॥ ३९ ॥
पितृदेवार्चनाहीनं परलोकविलोपकम् ।
देहात्मवादबहुलं [9]कुलजातिविवर्जितम् ॥ ४० ॥
धनैः स्त्रीभिर्भक्ष्यभोज्यैः [10]स्वपराभेददर्शिनम् ।
[11]नानामार्गैः परिवृतं पानभोजनतत्परैः ॥ ४१ ॥
श्रुत्वा जिनो निजगणैः कल्केरागमनं क्रुधा ।
अक्षौहिणीभ्यां सहितः [12]आजगाम [13]पुराद् बहिः ॥ ४२ ॥
गजतुरङ्गरथैः [14]समन्विता भूः
कनकविभूषणभूषितैर्नराङ्गैः ।
शतशतरथिभिर्धृतास्त्रशस्त्रैः
ध्वजपटराजिनिवारितातपैर्बभौ सा ॥ ४३ ॥

[15]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
बुद्धनिग्रहे कीकटागमनं[16] नाम त्रयोदशोऽध्यायः[17] ।

१. घ वाजि
२. ग इवेश्वरम्
३. घ दिशां पालान्
४. क धनान्यन्विष्य
५. ग यत्नतः
६. घ कारयिष्याम्यश्वमेधं यास्यामि दिग्जयाय च
७. क प्रीतः
८. क कीकटम्
९. ग जातिकुल
१०. स्वपत्न्या
११. घ नानाजनैः
१२. घ संबभूव
१३. क पुनः बहिः
१४. क समन्विता
१५. क × इति श्री
१६. ग × नाम
१७. ग + समाप्तः

# चतुर्दशोऽध्यायः

## सूत उवाच

ततो विष्णुः सर्वजिष्णुः कल्किः [1]कल्कविनाशनः ।
कालयामास [2]तां सेनां करिणीमिव केसरी ॥ १ ॥
सेनाङ्गनां तां रतिसङ्गरक्षतीं
रक्ताक्तवस्त्रां [3]विवृतोरुमध्याम् ।
पलायतीं चारुविकीर्णकेशां
विकूजतीं प्राह स कल्किनायकः ॥ २ ॥
[4]रे बौद्धा मा पलायध्वं निवर्तध्वं [5]रणाङ्गणे ।
युध्यध्वं पौरुषं साधु दर्शयध्वं पुनर्मम ॥ ३ ॥
जिनो हीनबलः कोपात् कल्केराकर्ण्य तद्वचः ।
प्रवियोद्धुं वृषारूढः खड्गचर्मधरो ययौ ॥ ४ ॥
[6]नानाप्रहरणोपेतो नानायुद्धविशारदः ।
कल्किना युयुधे [7]वीरो देवानां [8]विस्मयावहः ॥ ५ ॥
[9]शूलेन तुरगं हत्वा कल्किं बाणेन मोहयन् ।
[10]क्रोडीकृत्य द्रुतं भूमेर्नाशकत्तोलनाय सः ॥ ६ ॥
जिनो विश्वम्भरं ज्ञात्वा क्रोधाकुलितलोचनः ।
चिच्छेदास्य तनुत्राणं कल्केः [11]शस्त्रं च दासवत् ॥ ७ ॥

१. क कमललोचनभग पापविनाशनः
२. ग स्वां सेनां
३. क विवृतोऽमरत्याम्
४. ग × रे......पुनर्मम
५. क रणाङ्गणात्
६. ग तीक्ष्णप्रहरणापन्नः
७. घ धीरो
८. विस्मयावहः
९. क बलेन
१०. क क्रोडीकृत्य द्रुतम्
११. क सार्द्धं च

विशाखयूपोऽपि तथा निहत्य [1]गदया जिनम् ।
मूर्च्छितं कल्किमादाय लीलया रथमारूहत् ॥ ८ ॥
[2]लब्धसंज्ञस्तथा कल्किः सेवकोत्साहदायकः ।
समुत्पत्य रथात् तस्य नृपस्य जिनमाययौ ॥ ९ ॥
शूलव्यथां विहायाजौ महासत्त्वस्तुरङ्गमः ।
रिङ्गणैर्भ्रमणैः पादविक्षेपहननैर्मुहुः ॥ १० ॥
[3]दन्ताघातैः सटाक्षेपैर्बौद्धसेनागणान्तरे ।
निजघान रिपून् कोपाच्छतशोऽथ सहस्रशः ॥ ११ ॥
विश्वासवातैरुड्डीय केचिद् द्वीपान्तरेऽपतन् ।
हस्त्यश्वरथसंबाधाः पतिता रणमूर्द्धनि ॥ १२ ॥
[4]गर्गा जघ्नुः षष्टिशतं [5]भर्ग्यः कोटिशतायुतम् ।
विशालस्तु सहस्राणां पञ्चविंशं रणे त्वरन् ॥ १३ ॥
अयुते द्वे जघानाजौ पुत्राभ्यां सहितः कविः ।
[6]दशलक्षं[7] तथा प्राज्ञः पञ्चलक्षं सुमन्त्रकः ॥ १४ ॥
जिनं प्राह हसन् कल्किस्तिष्ठाग्रे मम दुर्मते ।
दैवं मां विद्धि सर्वत्र [8]शुभाशुभफलप्रदम् ॥ १५ ॥
मद्बाणजालभिन्नाङ्गो निःसङ्गो यास्यसि क्षयम् ।
न [9]यावत् पश्य तावत् त्वं बन्धूनां ललितं मुखम् ॥ १६ ॥
कल्केरितीरितं श्रुत्वा जिनः प्राह हसन् बली ।
दैवं [10]त्वदृश्यं शास्त्रे ते [11]क्रोधोऽयमुररीकृतः ॥ १७ ॥

१. क गजवाजिनाम्
२. क × लब्ध······जिनमाययौ
३. क दण्डाघातैः
४. क गार्ग्या जघ्नुः
५. क भर्ग्याः
६. क + मम दुर्मते
७. क × दशलक्षं······शुभाशुभफलप्रदम्
८. रूपारूपविनायकम्
९. क यावत् पश्यतीव स्वम्
१०. क तु त्वादृशम्
११. घ वधो



प्रत्यक्षवादिनो बौद्धा वयं यूयं [1]वृथाश्रमाः ।
यदि वा दैवरूपस्त्वं [2]तथाप्यग्रे स्थिता वयम् ॥ १८ ॥
[3]यदि भेत्तासि बाणौघैस्तदा बौद्धैः किमत्र ते ।
सोपालम्भं त्वया [4]स्यातं त्वय्येवास्तु स्थिरो भव ॥ १९ ॥
इति क्रोधाद् बाणजालैः कल्किं घोरैः समावृणोत् ।
स तु बाणमयं वर्षं क्षयं [5]निन्येऽर्कवद्धिमम् ॥ २० ॥
ब्राह्मं वायव्यमाग्नेयं पार्जन्यं चान्यदायुधम् ।
कल्केर्दर्शनमात्रेण [6]निष्फलान्यभवन् क्षणात् ॥ २१ ॥
यथोषरे बीजमुप्तं दानमश्रोत्रिये यथा ।
[7]यथा विष्णौ सतां द्वेषाद् भक्तिर्येन कृताप्यहो ॥ २२ ॥
कल्किस्तु तं वृषारूढमवप्लुत्य [8]करोऽग्रहीत् ।
ततस्तौ पेततुर्भूमौ ताम्रचूडाविव क्रुधा ॥ २३ ॥
[9]पतितः स कल्किकचं जग्राह [10]तत्करं करे ।
ततः समुपस्थितौ न्यग्रौ यथा [11]चाणूरकेशवौ ॥ २४ ॥
धृतहस्तौ धृतकचौ [12]ऋक्षाविव महाबलौ ।
युयुधाते महावीरौ जिनकल्की निरायुधौ ।
ततः [13]कल्किर्महातेजाः पदाघातेन तत्कटिम् ।
विभज्य पातयामास तालं मत्तगजो यथा ॥ २६ ॥

१. क वृथाश्रयाः
२. क स्थिताप्यग्रे तथा वयम्
३. ग यदा भेत्ता स्वबाणोच्चैस्तदारोघैः
४. ग स्यातम्
५. नित्यार्कवत्तम
६. क ग निष्कलान्य
७. क उससि विष्णो सतो द्वेषाभक्तिर्जिनकृतान्यहो
८. घ कचेऽग्रहीत्
९. घ पतित्वा
१०. क तत्कचम्
११. ग शूकरकेशवौ
१२. ग ऋषीविव
१३. ग घ कल्की महायोगी

जिनं निपतितं दृष्ट्वा बौद्धा हाहेति चुक्रुशुः ।
कल्केः सेनागणा विप्रा जहृषुर्निहतारयः ॥ २७ ॥

जिने निपतिते भ्राता [1]तस्य शुद्धोदनो बली ।
पादचारी गदापाणिः [2]कल्किं हन्तुं द्रुतं ययौ ॥ २८ ॥

कविस्तु तं बाणवर्षैः [3]परिवार्य समन्ततः ।
जगर्ज परवीरघ्नो [4]गजमावृत्य सिंहवत् ॥ २९ ॥

गदाहस्तं [5]समालोक्य पत्तिः स धर्मवित् कविः ।
पदातिर्गदापाणिस्तस्थौ शुद्धोदनाग्रतः ॥ ३० ॥

स तु शुद्धोदनस्तेन युयुधे भीमविक्रमः ।
गजः प्रतिगजेनेव दन्ताभ्यां सगदावुभौ ॥ ३१ ॥

युयुधाते महावीरौ गदायुद्धविशारदौ ।
कृतप्रतिकृतौ मत्तौ नदन्तौ [6]भीषणान् रवान् ॥ ३२ ॥

कविस्तु गदया गुर्व्या [7]शुद्धोदनगदां [8]भिदन् ।
करादपास्याशु तया स्वया वक्षस्यताडयत् ॥ ३३ ॥

गदाघातेन [9]महता [10]वीरः शुद्धोदनो भुवि ।
पतित्वा सहसोत्थाय तं जघ्ने गदया पुनः ॥ ३४ ॥

संताडितेन तेनापि शिरसा स्तम्भितः कविः ।
न पपात स्थितस्तत्र [11]स्थाणुवद् [12]विफलेन्द्रियः ॥ ३५ ॥

---

१. ग अस्य, घ तस्या
२. ग तथाभ्युद्गतं
३. क परिवोप
४. ग गजमादृत्य
५. घ तमालोक्य
६. ग नादभैरवम्, घ भैरवान् रवान्
७. क क्रुद्धो जिनमदस्
८. घ नदन्
९. घ निहतो
१०. ग धीरः
११. ग तावद्
१२. ग विकलेन्द्रियः, घ विह्वलेन्द्रियः



शुद्धोदनस्तमालोक्य [1]महासारं [2]रथायुतैः ।
प्रावृतं तरसा मायादेवीमानेतुमाययौ ॥ ३६ ॥

यस्या दर्शनमात्रेण देवासुरनरादयः ।
निःसारा प्रतिमाकाराः भवन्ति भुवनाश्रयाः ॥ ३७ ॥

[3]कल्किस्तानालोक्य [4]निजान् भ्रातृज्ञातिसुहृज्जनान् ।
[5]तथैव मायया जीर्णान् विभुरासीत्तदग्रतः ॥ ३८ ॥

तामालोक्य वरारोहां श्रीरूपां हरिरीश्वरः ।
सा प्रियेव तमालोक्य प्रविष्टा तस्य विग्रहे ॥ ३९ ॥

तामनालोक्य ते [6]जिना मातरं [7]कातरारवाः ।
रुरुदुः [8]सहसा दीना हीनस्वबलपौरुषाः ॥ ४० ॥

विस्मयाविष्टमनसः क्व गतेयमथाब्रुवन् ।
कल्किः समालोकनेन समुत्थाप्य [9]निजान् जनान् ॥ ४१ ॥

[10]निशातमसिमादाय [11]म्लेच्छान् हन्तुं मनो दधे ।
सन्नद्धं तुरङ्गारूढं दृढहस्तधृतत्सरुम् ॥ ४२ ॥

---

१. ग महासत्त्वं
२. क यथायुतम्
३. घ +
बौद्धा शौद्धोदनाद्यग्रे कृत्वा तामग्रतः पुनः ।
योद्धुं समागता म्लेच्छकोटिलक्षशतैर्वृताः ।
सिंहध्वजोत्थितरथां फेरुकाकगणावृताम् ।
सर्वास्त्रशास्त्रजननीं षड्वर्गपरिसेविताम् ।
नानारूपां बलवतीं त्रिगुणव्यक्तिलक्षिताम् ।
मायां निरीक्ष्य पुरतः कल्किसेना समापतत् ।
निःसाराः प्रतिमाकाराः समस्ताः शस्त्रपाणय ।
४. ग निजभ्रातृसुहृद्द्विजान्
५. घ मायया जायया
६. घ बौद्धा
७. घ कतिधा नरा
८. घ सङ्घशो
९. क प्रियान्
१०. क निशातममादाय
११. ग श्लेच्छान्

धनुर्निषङ्ग[1]मनिशं बाणजालप्रकाशितम् ।
धृतहस्ततनुत्राणगोधाङ्गुलिविराजितम् ॥ ४३ ॥
मेघोपर्युसताराभं [2]दर्शने वर्णबिन्दुकम् ।
किरीटकोटिविन्यस्तमणिराजिविराजितम् ॥ ४४ ॥

कामिनीनयना[3]नन्दसन्दोहरसमन्दि[4]रम् ।
विपक्षपक्षविक्षेपक्षिप्तरूक्षमकटाक्षकम् ॥ ४५ ॥
निजभक्तजनोल्लाससंवासचरणाम्बुजम् ।
[5]तं दृष्ट्वा कल्किं ते बौद्धास्तत्रसुधर्मनिन्दकाः ।
[7]जहृषुः सुरसंघाः खे यागाहुतिहुताशनाः ॥ ४६ ॥
सुबलमिलनहर्षः शत्रुनाशैतकर्षः ।
समरवरविलासः साधुसत्[8]कारकाशः ।
[9]स्वजनदुरितहर्त्ता जीवजातस्य भर्त्ता ।
रचयतु कुशलं वः[10] कामपूरावतारः ॥ ४७ ॥

[11]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
बौद्धयुद्धो[12]नाम चतुर्दशोऽध्यायः

१. क मिलितं
२. घ दंशन
३. घ मन्द
४. क मन्थरम्
५. ग घ निरीक्ष्य
६. क + युद्धाय सज्जास्ते सर्वे बुद्धवैरं तितीर्षवः
७. क × जहृषुः……हुताशनाः
८. क सत्कारकारण
९. क सुजन
१०. क नः
११. क × इति श्री
१२. ग × नाम

# पञ्चदशोऽध्यायः

## सूत उवाच

ततः कल्किर्म्लेच्छगणान् करवालेन कालितान् ।
बाणैः संताडितानन्याननयद् यमसादनम् ॥ १ ॥

विशाखयूपोऽपि तथा कविप्राज्ञसुमन्त्रकाः ।
गार्ग्यभार्ग्यविशालाद्या म्लेच्छान् निन्यु[1]र्यमालयम् ॥ २ ॥

[2]कपोतरोमा काकाक्षः काककृष्णादयोऽपरे ।
बौद्धाः शौद्धोदनाः याता युयुधुः कल्किसैनिकैः ॥ ३ ॥

तेषां युद्धमभूद् घोरं भयदं [3]सर्वलोकानाम् ।
भूतेशानन्दजनकं रुधिरारुणकर्दमम् ॥ ४ ॥

गजाश्वरथसङ्घानां पततां [4]रुधिरस्रवैः ।
[5]तीरस्थकेशशैवाला [6]वाजिग्रहा [7]सुसाधिता ॥ ५ ॥

गजैर्गजा नरैरश्वाः खरैरुष्ट्रा रथै रथाः ।
निपेतुर्बाणभिन्नाङ्गाश्छिन्नबाह्वङ्घ्रिकन्धराः ॥ ६ ॥

१. यमक्षयम्
२. क कपोतरोमकाकाक्षकाककृष्णादयो
३. घ सर्वदेहिनाम्
४. क रुधिरस्रवैः
५. घ स्रवन्ती
६. क वाजिग्राहा
७. क सुपालिका
८. क +
धनुस्तरङ्गा दुष्पारा गजरोधःप्रवाहिणी
शिरःकूर्मा रथतरिः पणिमीनासृगापगा ।
प्रवृत्ता तत्र बहुधा हर्षयन्तो मनस्विनाम्
दुन्दुभेयरवा फेरुशकुनानन्ददायिनी ।

भस्मना गुण्ठितमुखा रक्तवस्त्रा [1]निरावृताः ।
विकीर्णकेशाः परितो भान्ति सन्न्यासिनो यथा ॥ ७ ॥
व्यग्राः केऽपि पलायन्ते [2]याचन्तेऽन्ये जलं पुनः ।
कल्किसेनाशुगक्षुण्णा म्लेच्छा नो शर्म लेभिरे ॥ ८ ॥
तेषां स्त्रियो रथारूढा गजारूढा [3]विहङ्गमाः ।
समारूढा हयारूढा खरोष्ट्र[4]कक्षवाहनाः ॥ ९ ॥
योद्धुं [5]समाययुस्त्यक्त्वा पत्यापत्यसुखाश्रयान् ।
रूपवत्यो युवत्योऽतिबलवत्यः परिव्रताः ॥ १० ॥
[6]नानाभरणभूषाढ्याः सन्नद्धा विशदप्रभाः ।
खड्गशक्तिधनुर्बाणवलयाक्तकराम्बुजाः ॥ ११ ॥
स्वैरिण्योऽप्यतिकामिन्यो [7]पुंश्चल्यश्च पतिव्रताः ।
ययु र्योद्धुं कल्किसैन्यैः पतीनां [8]तु विनातुराः ॥ १२ ॥
[9]मृद्ङ्गस्मकाष्ठचित्राणां [10]प्रभुताम्नायशासनात् ।
साक्षात् पतीनां निधनं किं [11]युवत्योऽपि सेहिरे ॥ १३ ॥
ताः स्त्रियः स्वपतीन् [12]बाणभिन्नान् व्याकुलितेन्द्रियान् ।
कृत्वा पश्चाद् युयुधिरे कल्किसैन्यैर्धृतायुधाः ॥ १४ ॥
ताः स्त्रीरुद्वीक्ष्य ते सर्वे [13]विस्मयाकुलमानसाः ।
कल्किमागत्य ते योधाः कथयामासुरादरात् ॥ १५ ॥

---

१. घ निवारिताः
२. घ याचन्त्यन्यो
३. क विहङ्गमैः
४. घ वृषवाहनाः
५. ग अभ्याययुः
६. ग नानाभरणैः
७. क पुंश्चल्यपतिव्रता
८. घ घ विधनातुराः
९. ग मृद्व्रण
१०. ग प्रभुताश्रीयशासनात्
११. क भवत्योऽभितोहरे
१२. बाणभिन्नाङ्गान् व्याकुलेन्द्रियान्
१३. घ विस्मयस्मितमानसाः



स्त्रीणामेव युयुत्सूनां कथाः श्रुत्वा [1]धरापतिः ।
कल्किः समुदितः प्रायात् स्वसैन्यैः सानुगो रथैः ॥ १६ ॥
ताः समालोक्य पद्मेशः सर्वशस्त्रास्त्रधारिणीः ।
नानावाहनसंरूढाः कृतव्यूहा उवाच सः ॥ १७ ॥

### कल्किरुवाच

रे स्त्रियः श्रृणुतास्माकं वचनं पथ्यमुत्तमम् ।
स्त्रिया युद्धेन किं पुंसां व्यवहारोऽत्र न विद्यते ॥ १८ ॥
मुखेषु चन्द्रबिम्बेषु राजितालकपङ्क्तिषु ।
[3]प्रहरिष्यन्ति के तत्र नयनानन्ददायिषु ॥ १९ ॥
विभ्रान्ततारभ्रमरं नवकोकनदप्रभम् ।
दीर्घापाङ्गेक्षणं यत्र तत्र कः प्रहरिष्यति ॥ २० ॥
[4]लोलल्लीलालकव्रातचकोराक्रान्तचन्द्रिकम् ।
मुखचन्द्रं चिह्नहीनं [5]को नु तं प्रहरिष्यति ॥ २१ ॥
[6]स्तनभारभराक्रान्तनितान्तक्षीणमध्यमम् ।
तनुलोमलताबन्धं कः पुमान् [7]प्रहरिष्यति ॥ २२ ॥
[8]नेत्रानन्देन नेत्रेण [9]समावृतमनिन्दितम् ।
जघनं [10]सुघनं रम्यं बाणैः कः प्रहरिष्यति ।
इति कल्केर्वचः श्रुत्वा [11]प्रहसन् प्राहुरादृताः ॥ २३ ॥

---

१. घ महामतिः
२. क संगिषु
३. ग प्रहरिष्यन्ति न
४. घ + वक्षोजशम्भू सत्तारहारव्यालविभूषितौ ।
कन्दर्पदर्पदलनौ तत्र कः प्रहरिष्यति ।
५. घ कस्तं हन्तुमिहार्हति
६. घ स्तनुभार
७. ग प्रहरिष्यन्ति
८. क नेत्राण्यनेन
९. क समादात
१०. ग सुजघनम्
११. क प्रहस्य, घ प्राहस्य

अस्माकं त्वं पतीन् हंसि तेन नष्टा वयं विभो ।
[1]हन्तुं गतानामस्त्राणि [2]करादेवागतान्युत ॥ २४ ॥
खड्गशक्तिधनुर्बाणशूलतोमरयष्टयः ।
ताः प्राहुः पुरतो मूर्त्ताः [3]कार्त्तस्वरविभूषणाः ॥ २५ ॥

[4]**शस्त्राण्यूचुः**

[5]यमासाद्य वयं नार्यो हिंसयामः [6]स्वतेजसा ।
तमात्मानं सर्वमयं जानीत कृतनिश्चयाः ॥ २६ ॥
[7]तमीशमात्मना नार्यः चरामो यदनुज्ञया ।
यत्कृता नामरूपादिभेदेन विदिता वयम् ॥ २७ ॥
रूपगन्धरसस्पर्शशब्दाद्या भूतपञ्चकाः ।
चरन्ति यदधिष्ठानात् सोऽयं कल्किः परात्मकः ॥ २८ ॥
कालस्वभावसंस्कारनामाद्या प्रकृतिः परा ।
[8]यस्येक्षया सृजत्यण्डं [9]महाहङ्काररूपिणम् ॥ २९ ॥
यन्मायया [10]जगज्जाता सर्गस्थित्यन्तसंज्ञिता ।
[11]स एवादौ स एवान्ते तस्या यः सोऽयमीश्वरः ॥ ३० ॥
असौ पतिर्मे भार्याहमस्य [12]पुत्राः सबान्धवाः ।
स्वप्नोपमास्तु तन्निष्ठा विविधाश्चैन्द्रजालवत् ॥ ३१ ॥

१ क + वयं त्वां प्रहरिष्यामः संमीता शत्रुमात्मनः ।
मायायुद्धपरात्मानं महदादिभिरावृतम् ।
इत्युक्त्वा ताः समावृत्य पद्मेशं च सुरेश्वरम् ।
२. घ कराण्येव
३. ग कार्त्तश्च स्वरभूषणाः
४. क शस्त्रास्त्राण्यूचुः
५. क समासाद्य
६. क सुतेजिताः
७. क रामसेनात्मनाप्यार्यः
८. क स्वेच्छयानुसृजत्यण्डम्
९. घ महाहङ्कारकादिकान्
१०. ग घ जगद्धात्र्या
११. घ य एवाद्यः
१२. घ पुत्रास्सबान्धवाः



स्नेहमोहनिबन्धानां [1]यातायातदृशां मतम् ।
न कल्किसेविनां [2]देव द्वेषविद्विष्टकारणम् ॥ ३२ ॥
कुतः कालः कुतो मृत्युः क्व यमः क्वास्ति देवता ।
[3]स एव कल्किर्भगवान् मायया बहुलीकृतः ॥ ३३ ॥
न शस्त्राणि वयं नार्यः [4]संप्रहृत्य न च क्वचित् ।
शस्त्र[5]प्रहर्तृभेदोऽयमविवेकः [6]परात्मनः ॥ ३४ ॥
कल्किदासस्यापि वयं हन्तुं नार्हाः [7]कथोद्भुतम् ।
हनिष्यामो दैत्यपतेः प्रह्लादस्य यथा हरिम् ॥ ३५ ॥
इत्यस्त्राणां वचः श्रुत्वा स्त्रियो विस्मितमानसाः ।
[8]स्नेहमोहादिनिर्मुक्तास्तं कल्किं शरणं [9]गताः ॥ ३६ ॥
ताः समालोक्य पद्मेशः प्रणता ज्ञाननिष्ठया ।
प्रोवाच प्रहसन् भक्तियोगं [10]कालुष्यनाशकम् ॥ ३७ ॥
कर्मयोगं चात्मनिष्ठं [11]ज्ञानयोगं भिदाश्रयम् ।
[12]नैष्कर्म्यलक्षणं तासां कथयामास माधवः ॥ ३८ ॥
ताः स्त्रियः कल्कि[13]कथितज्ञानेन विजितेन्द्रियाः ।
भक्त्या पर[14]मवापुस्तत् योगिनां दुर्लभं पदम् ॥ ३९ ॥
दत्त्वा मोक्षं म्लेच्छबौद्धप्रियाणां
कृत्वा युद्धं भैरवं भीमकर्मा ।

१. ग जाते जातं दशामवाम्
२. घ रागद्वेषविद्वेषकारिणाम्
३. ग सर्वः
४. ग घ संप्रहार्यो
५. क प्रहर्तुर्भेदो
६. क ग परात्मकः
७. कथं नु तम्
८. स्नेहमोहविनिर्मुक्ता
९. ग घ ययुः
१०. घ कल्मषनाशनम्
११. क ज्ञानयोगभिदाश्रितम्
१२. क किष्कर्मलक्षणम्
१३. घ गदित
१४. ग परमां पुस्तकम्

हत्वा बौद्धान् म्लेच्छसङ्घांश्च कल्कि-
स्तेषां ज्योतिः [1]स्थानमापूर्य्य रेजे ॥ ४० ॥

ये शृण्वन्ति वदन्ति बौद्धनिधनं म्लेच्छक्षयं सादरात्-
लोकाः शोकहरं सदा [2]सुखकरं भक्तिप्रदं माधवे ।
तेषामेव पुनर्न जन्ममरणं सर्वार्थसम्पत्करं
मायामोहविनाशनं प्रतिदिनं संसारतापच्छिदम् ॥ ४१ ॥

[3]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
बौद्धम्लेच्छनिधनं[4] नाम पञ्चदशोऽध्यायः[5] ॥

१. क स्वात्मनापूर्य २. घ शुभकरम्
३. क × इति श्री ४. ग × नाम
५. ग + समाप्तः

# षोडशोऽध्यायः

## सूत उवाच

ततो बौद्धान् म्लेच्छगणान् विजित्य सह सैनिकैः ।
[1]रत्नान्याहृत्य प्राज्यानि कीकटान् पुनराव्रजत् ॥ १ ॥
[2]तेजसामालयः कल्किस्तथा धर्मस्य रक्षकः ।
[3]चक्रतीर्थं [4]समागत्य स्नानं विधिवदाचरत् ॥ २ ॥
भ्रातृभि[5]र्लोकपालैश्च बन्धुभिः स्वजनैर्वृतः ।
[6]सभायां तान् मुनींस्तत्र ददृशे [7]हीनमानसान् ॥ ३ ॥
[8]समुद्धियागतांस्तत्र परिपाहि जगत्पते ।
[9]इत्युच्चरन्तो बहुधा ये तानाह हरिः परः ॥ ४ ॥
वालखिल्यादिकानल्प[10]कायांश्चीरजटाधरान् ।
[11]विनयी धीरबुद्धिः स तानाह भयविह्वलान् ॥ ५ ॥
कस्माद् यूयं समायाताः [12]कथं वा भयभीषणाः ।
[13]अहं सर्वं हनिष्यामि यदि [14]वासौ पुरन्दरः ॥ ६ ॥
[15]श्रुत्वेदं [16]कल्किवाक्यं च तेनाश्वासितमानसाः ।
जगदुः पुण्डरीकाक्षं विकुम्भदुहितुः [17]वचः ॥ ७ ॥

१. घ धनान्यादाय प्राज्यानि २. घ कल्किः परमतेजस्वी धर्माणां परिरक्षकः
३. क चक्रतीर्थे ४. ग संप्राप्यासौ
५. घ लोकपालाभैर्बहुभिः ६. घ समायातान्
७. घ दीनमासान् ८. क समुद्गीयागसां तत्र
९. घ इत्युक्तवन्तो १०. क जटावृतान्, ग पटावृतान्
११. घ विनयावततः कल्किस्तानाह कृपणान् भयात् १२. घ केन वा भीषिता वत
१३. घ तमहं निहनिष्यामि १४. ग घ वा स्याद्
१५. घ इत्याश्रुत्य कल्किवाक्यं तेनोल्लासितमानसाः १६. क हरेर्वाक्यं
१७. घ कथाम्

### मुनय ऊचुः

शृणु विष्णुयशःपुत्र कुम्भकर्णात्मजात्मजा ।
[1]कुथोदरीति विख्याता गगनार्द्धसमुत्थिता ॥ ८ ॥
कालकञ्जस्य महिषी विकञ्जजननी [2]तथा ।
हिमालये शिरः कृत्वा पादौ च [3]निषधाचले ।
शेते स्तनं पाययन्ती विकञ्जं प्रस्तुतस्तनी ॥ ९ ॥
तस्या निश्वासवातेन [4]व्याकुला वयमागताः ।
दैवेनैव समानीताः संप्राप्तास्त्वत्[5]पदाम्बुजम् ।
[6]ऋषयो ब्राह्मणाश्चैव रक्षणीयास्त्वयैव हि ॥ १० ॥
[7]अभयं ब्राह्मणानां च इत्युक्त्वा कल्किः धर्मवित् ।
सेनागणैः परिवृतो जगाम [8]तुहिनाचलम् ॥ ११ ॥
उपत्यकां च [9]सम्प्राप्तः निशामेकां निनाय सः ।
प्रातर्जिगमिषुः सैन्यैर्ददृशे क्षीरनिम्नगाम् ॥ १२ ॥
[10]काशेन्दुधवलाकारां फेनिलां बृहतीं द्रुतम् ।
चलन्तीं वीक्ष्यते सर्वे स्तम्भिता विस्मयान्विताः ॥ १३ ॥
सेनागणगजाश्वादिरथयोधैः समावृतः ।
[11]कल्किः परपुरञ्जयः [12]ज्ञातार्थोऽपि मुनीश्वरान् ॥ १४ ॥
पप्रच्छ का[13] नदी चेयं कथं दुग्धवहाभवत् ।
ते कल्केस्तु वचः श्रुत्वा मुनयः प्राहुरादरात् ॥ १५ ॥

१. घ पृथूदरीति
२. घ च सा
३. ग विन्ध्यपर्वते
४. घ विवशो
५. घ पदास्पदम्
६. घ मुनयो रक्षणीयास्ते रक्षःसु च विपत्सु च
७. घ इति तेषां वचः श्रुत्वा कल्किः परपुरञ्जयः
८. ग घ हिमवद्गिरिम्
९. ग घ समासाद्य
१०. ग घ शङ्खेन्दु
११. घ कल्किस्तु भगवांस्तत्र
१२. क ज्ञातानर्थो
१३. क कारणं तस्यास्ते चोचुःसरिदुद्गमम्



शृणु कल्के [1]स्रोतस्विन्याः प्रभवं [2]तुहिनाचले ।
समायाता [3]कुथोदर्याः स्तनप्रस्रवनादिह ॥ १६ ॥
[4]घटिकानन्तरं चास्याः पयो यास्यति [5]वेगितम् ।
[6]क्षीणसारा तटाकारा भविष्यति महामते ॥ १७ ॥
इति श्रुत्वा मुनीनां तु वचनं सैनिकैः सह ।
अहो किमस्या राक्षस्याः स्तनादेका[7]त्वियं नदी ॥ १८ ॥
एकं स्तनं [8]पाययति विकञ्जं पुत्रमादरात् ।
न जानेऽस्याः शरीरस्य प्रमाणं कति वा भवेत् ॥ १९ ॥
बलं वास्या निशाचर्या इत्यूचुर्विस्मयान्विताः ।
[9]कल्किश्चासौ महाबाहुः सेनाभिः सहसा ययौ ॥ २० ॥
[10]मुनिदर्शितमार्गेण यत्रास्ते सा निशाचरी ।
पुत्रं स्तनं पाययन्ती [11]गिरेरूर्द्ध्वं घनोपमा ॥ २१ ॥
श्वासवातातिवातेन दूरक्षिप्तवनद्विपाः ।
यस्याः [12]कर्णविलावासे प्रसुप्ताः सिंहसंकुलाः ॥ २२ ॥
[13]पुत्रपौत्रपरिवृता गिरिगह्वरविभ्रमाः ।
[14]केशमूलं च संप्राप्य हरिणाः शेरते [15]सुखम् ॥ २३ ॥
[16]यूका इव [17]न च व्यग्रा [18]लुब्धजातङ्कया भृशम् ।
तामालोक्य गिरेर्मूर्ध्नि [19]गिरितत्परमाद्भुताम् ॥ २४ ॥

१. घ पयस्वत्याः
२. घ हिमवद्गिरौ
३. क पृथूदर्याः
४. घ घटिकासप्तकेश्चान्या
५. क वेपितम्
६. क घ दीनसारा
७. क दियम्
८. क पाययन्ती
९. ग घ कल्किः पसरमा सन्नह्य
१०. क पुनर्दर्शित
११. ग घ गिरिर्मूर्ध्नि
१२. घ कर्णविलावासं
१३. क ग पुत्रपौत्रैः
१४. घ केशमूलमुपालभ्य
१५. ग घ चिरम्
१६. क यूकादिव
१७. न ते
१८. क लुब्धकान्तकया
१९. क गिरिवत् परमाद्भुताम्

कल्किः कमलपत्राक्षः सर्वांस्तानाह सैनिकान् ।
भयोद्विग्नान् बुद्धिहीनान् त्यक्तोद्यमपरिच्छदान् ॥ २५ ॥

[1]कल्किरुवाच

गिरिदुर्गे वह्निदुर्गं कृत्वा तिष्ठन्तु [2]सैनिकाः ।
गजाश्वरथयोधा [3]ये समायान्तु मया सह ॥ २६ ॥
अहं स्वल्पेन सैन्येन याम्यस्याः संमुखं [4]द्रुतम् ।
प्रहन्तु[5] [5]बाणसन्दोहैः [6]तोमरखड्गशक्तिभिः ॥ २७ ॥
इत्युक्त्वा [7]स्थाप्य पश्चात् तान् बाणैश्च[8] समताडयत् ।
सा क्रुधोत्थाय सहसा [9]जगर्ज भीषणं द्रुतम् ॥ २८ ॥
[10]निनादेन सुमहता व्याकुलाश्चाभवन् जनाः ।
[11]निपेतुस्तत्र सैनिका हाहाकाररवेण च ॥ २९ ॥
सा रथांश्च गजांश्चापि विवृतास्या भयानका ।
[12]जघास प्रश्वासवातैः समानीय [13]कुथोदरी ॥ ३० ॥
सेनागणास्तदुदरं प्रविष्टाः कल्किना सह ।
[14]यथा सर्पमुखे हृष्टाः प्रविशन्ति पिपीलिकाः ॥ ३१ ॥
[15]तदालोक्य सुराः सर्वे हाहाकारं प्रचक्रिरे ।
तत्रस्था मुनयः शेपुर्जेपुश्चान्ये महर्षयः ॥ ३२ ॥

१. क ग ×
२. घ मामकाः
३. ग मे
४. ग घ शनैः
५. क तां च सैन्योघैः
६. घ खड्गशक्तिशरश्वधैः
७. क स्थापयित्वा तान्
८. घ स्तां समहनद् बली
९. ग घ ननर्द
१०. घ तेन नादेन महता वित्रस्ता
११. घ निपेतुः सैनिकाः सर्वे मूर्च्छिता धरणीतले
१२. ग जघान
१३. क पृथूदरी
१४. घ यथर्क्षमुखवातेन
१५. घ तद् दृष्ट्वा देवगन्धर्वा



निपेतुरन्ये दुःखार्ता ब्राह्मणा ब्रह्मवादिनः ।
रुरुदुः [1]शिष्टयोधा ये जहृषुस्ते[2] निशाचराः ॥ ३३ ॥
जगतां [3]कदनं दृष्ट्वा सस्माराात्मानमात्मना ।
कल्किः कमलपत्राक्षः [4]सुररिपुनिषूदनः ॥ ३४ ॥
बाणाग्नि चेलचर्माभ्यां [5]कर्मभिर्यानदारुभिः ।
प्रज्वाल्योदरमध्ये[6] तु करवालं समाददे ॥ ३५ ॥
[7]बहिर्बभूव सर्वेशः कल्किः कल्कविनाशनः ।
सहस्राक्षो यथा वृत्रकुक्षिं [8]दम्भोलिनेमिना ॥ ३६ ॥
योनिरन्ध्राद् गजरथास्तुरगाश्चाभवन् बहिः ।
नासिकाकर्णविवरात् केऽपि तस्या विनिर्गताः ॥ ३७ ॥
[9]ते निर्गतास्ततस्तस्याः सैनिका रुधिरोक्षिताः ।
तां विव्यधु[10]र्निक्षिपन्तीं तरसा चरणौ करौ ॥ ३८ ॥
[11]ममार सा भिन्नदेहा भिन्नकुक्षिशिरोधरा ।
नादयन्ती दिशो[12]द्यां खं चूर्णयन्ती च पर्वतान् ॥ ३९ ॥
[13]विकञ्जोऽपि तथा वीक्ष्य मातरं कातरोऽभवत् ।
[14]महाबाहुः क्रुधाधावत् एकाकी रिपुमर्दनः ॥ ४० ॥

१. क श्रेष्ठयोद्धारो
२. घ स्तन् निशाचराः
३. क वादनम्, ग विनाशं
४. घ सुराराति
५. क कम्बलैर्यानदारुभिः
६. घ मध्येन
७. घ + तेन खड्गेन महता दारुणं निर्भिद्य बन्धुभिः ।
बलिभिर्भ्रातृभिर्वाहिर्वृतः शस्त्रास्त्रपाणिभिः ।
८. क दम्भोलिना सह
९. ग × ते……करौ
१०. क निरीक्षन्तीम्
११. क + यथा पिपीलिकाः कालसर्पस्याङ्गं विशन्ति हि
१२. क दिवम्
१३. क विकुञ्जोऽपि, घ करञ्जोऽपि
१४. घ स विकञ्जः क्रुधाधावन् सेनामध्ये निरायुधः

गजमालाकुलो वक्षो वाजिराजिविभूषणः।
महासर्पकृतोष्णीष. केसरी [1]मुद्रिताङ्गुलिः ॥ ४१ ॥
[2]जघान कल्किसेनां तां [3]मातृशोकसमाकुलः।
स कल्किस्तं ब्राह्ममस्त्रं रामदत्तं जिघांसया ॥ ४२ ॥
धनुषा पञ्चवर्षीयं राक्षसं [4]हन्तुमाददे।
तेनास्त्रेण शिरस्तस्य छित्वा भूमावपातयत् ॥ ४३ ॥
रुधिराक्तं धातुचित्रं गिरिशृङ्गमिवाद्भुतम्।
[5]सपुत्रां राक्षसीं हत्वा मुनीनां [6]प्रीतिकारणम् ॥ ४४ ॥
गङ्गातीरे हरिद्वारे [7]तस्य वासमकल्पयत्।
देवानां कुसुमासारैर्मुनिस्तोत्रैः सुपूजितः ॥ ४५ ॥
[8]निनाय तां निशां तत्र कल्किः [9]परिजनान्वितः।
प्रातर्ददर्श गङ्गायास्तीरे मुनिगणान् बहून् ॥ ४६ ॥
[10]स्तवैः नत्वा [11]स्तुत्वा विधिवदुदितैर्जह्नुतनयाम्।
प्रपश्यन्तं कल्किं मुनिजनगणा द्रष्टुमगमन् ॥ ४७ ॥

[12]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
राक्षसीवधे हरिद्वारे मुनिदर्शनं [13]नाम षोडशोऽध्यायः[14]।

---

१. क मुद्रिकाङ्गुलिः
२. ग घ मदर्दं
३. घ मातुर्व्यसनकर्षितः
४. ग घ शस्त्रमाददे
५. क ग सबलं
६. घ वचनाद् विभुः
७. घ निवासं समकल्पयत्
८. ग व्यतीयाय
९. घ परिजनावृतः
१०. घ + तस्याः स्नानव्याजविष्णोरात्मनो दर्शनाकुलान्।
हरिद्वारे गङ्गातटनिकटपिण्डारकवने।
वसन्तं श्रीमन्तं निजगणवृतं तं मुनिगणाः।
११. घ नत्वा
१२. क × इति श्री
१३. ग × नाम
१४. ग + समाप्तः

# सप्तदशोऽध्यायः

## सूत उवाच

[1]समागतांस्तानालोक्य कल्किः [2]धर्मभृतां वरः।
[3]पूजयामास विधिवत् सुखासीनानुवाच [4]सः ॥ १ ॥

## [5]कल्किरुवाच

के यूयं [6]ब्रह्मवेत्तार इह भाग्याच्च संप्राप्ताः।
[7]तीर्थाटनोद्यता लोकत्रयाणामुपकारकाः ॥ २ ॥
[8]अहो नु भाग्यमस्माकं पुण्यवन्तो यशस्विनः।
यतः कृपाकटाक्षेण युष्माभिरवलोकिताः ॥ ३ ॥
ततस्ते वामदेवोऽत्रिर्वसिष्ठो [10]गालवो भृगुः।
पराशरो [9]नारदोऽश्वत्थामा रामः कृपस्त्रितः ॥ ४ ॥
दुर्वासा देवलः कण्वो वेदप्रमितिरङ्गिराः।
एते चान्ये च बहवो मुनयः [11]परधर्मज्ञाः ॥ ५ ॥
कृत्वाग्रे मरुदेवापी चन्द्रसूर्यकुलोद्भवौ।
[12]नृपौ तौ बलशालिनौ तपस्याभिरतौ चिरम् ॥ ६ ॥
ऊचुः प्रहृष्टमनसः कल्किं [13]कल्कविनाशनम्।
महोदधेस्तीरगतं विष्णुं सुरगणा यथा ॥ ७ ॥

---

१. ग घ सुस्वागतान् मुनीन् दृष्ट्वा
२. घ परमधर्मवित्
३. ग घ पूजयित्वा च
४. ग घ तान्
५. क ग ×
६. घ सूर्यसङ्काशा इह भाग्याच्च संप्राप्ताः
७. घ तीर्थाटनोत्सुका
८. ग घ वयं लोके पुण्यवन्तो भाग्यवन्तो
९. क नारदो
१०. क गालवो
११. घ संशितव्रताः
१२. घ राजानौ तौ महावीर्यौ
१३. क कलि

**मुनय ऊचुः**

जयाशेषजगन्नाथ विदिताखिलमानस ।
सृष्टिस्थितिलयाध्यक्ष परमात्मन् प्रसीद नः ॥ ८ ॥
कालकर्मगुणावासप्रसारित[1]निजक्रिय ।
ब्रह्मादि[2]स्तुतपादाब्ज [3]पद्मनाथ प्रसीद नः ॥ ९ ॥
[4]तेषां स्तुत्वा प्रसन्नात्मा कल्किः प्राह जगत्पतिः ।
कावेतौ भवतामग्रे महासत्त्वौ तपस्विनौ ॥ १० ॥
कथमत्रागतौ स्तुत्वा गङ्गां मुदितमानसौ ।
का वा [5]स्तुतिस्तु जाह्नव्या युवयो[6]र्नामनी च के ॥ ११ ॥
तयोर्मरुः [7]प्रहृष्टः सन् वंशमाहात्म्यनिर्मलः ।
[8]प्रारेभे गदितुमत्र आत्मनो वंशकीर्तनम् ॥ १२ ॥

**मरुरुवाच**

सर्वं [9]जानासि महात्मन् [10]अन्तर्यामि हृदि स्थितः ।
तवाज्ञया सर्वमेतत् कथयामि [11]यथायथम् ॥ १३ ॥
तव नाभेरभूद् ब्रह्मा मरीचिस्तत्सुतोऽभवत् ।
[12]ततो मनुस्तत्सुतोऽभूदिक्ष्वाकुः सत्यविक्रमः ॥ १४ ॥
युवनाश्व इति ख्यातो मान्धाता तत्सुतोऽभवत् ।
[13]पुरुकुत्सस्तत्सुतोऽ[14]भूदनरण्यो [15]महामतिः ॥ १५ ॥

---

१. क निजाश्रया
२. घ नुत
३. ग नारायण
४. ग घ इति तेषां वचः श्रुत्वा
५. क स्तुतिश्च
६. क नाम किं च कौ
७. घ प्रमुदितः कृताञ्जलिपुटः कृती
८. ग घ आदावुवाच विनयी निजवंशानुकीर्त्तनम्
९. घ वेत्सि परमात्मा
१०. क स्वन्तर्यामिन्
११. घ शृणु प्रभो
१२. क + ततस्तु कश्यपो जातस्तस्यादित्यः सुतोऽभवत्
१३. क कुरुकुत्स
१४. क भूदरण्यो
१५. क महीपतिः



त्रसदस्युः पिता तस्माद्धर्यश्वस्त्वरुणस्ततः ।
त्रिशङ्कुस्तत्सुतो धीमान् हरिश्चन्द्रो [1]महाबली ॥ १६ ॥
हरितस्तत्सुतस्तस्माद् भरुकस्तत्सुतो वृकः ।
तत्सुतः सगरस्तस्मादसमञ्जास्ततोऽशुमान् ॥ १७ ॥
[2]ततो दिलीपस्तत्पुत्रो भगीरथ इति स्मृतः ।
[3]भगीरथात् सुतस्तस्मान्नाभस्तस्मादभूद् बली ।
[4]सिन्धुद्वीपसुतस्तस्मादायुतायुस्ततोऽभवत् ॥ १८ ॥
ऋतुपर्णस्तत्सुतोऽभूत् सुदासस्तत्सुतोऽभवत् ।
सौदासस्तत्सुतो श्रीमानश्मकस्तत्सुतोऽ[5]भवत् ॥ १९ ॥
[6]तस्माद् जा.. दशरथस्तस्मादेडविडस्ततः ।
[7]राजा विश्वसहस्तस्मात् खट्वाङ्गो दीर्घबाहुकः ॥ २० ॥
ततो रघुरजस्तस्मात्[8] सुतो दशरथः कृती ।
तस्माद् रामो हरिः [9]साक्षाज्जगन्नाथो जगत्पतिः ॥ २१ ॥
[10]रामाविर्भावमाकर्ण्य कल्किः परमहर्षितः ।
मरुं प्राह विस्तरेण [11]श्रीरामचरितं वद ॥ २२ ॥
[12]तच्चरितं रघुपतेः को व्याख्यातुमिहार्हति ।
शेषः सहस्रवदनैरपि लालायितो भवेत् ॥ २३ ॥

---

१. घ प्रतापवान्
२. घ + येनानीता जाह्नवीयं ख्याता भागीरथी भुवि ।
स्तुता नुता पूजितेयं तव पादमुखोद्भवा ॥ १८ ॥
३. क भगीरथसुतातस्मान्नाभिस्तस्मादभूद्बली
४. क × सिन्धु …… अभवत् (१८)
५. घ मतः
६. क तस्मादासीद्दशरथः कृती तस्माद्दसौ हरिः, घ मूलकात् स दशरथ
७. क + हैडविडस्ततो सुतः सिन्धुद्वीपस्ततोऽभवत्
८. क तस्माज्जातो
९. ग घ साक्षादाविर्भूतो
१०. घ रामावतार
११. ग रामस्य चरितं
१२. घ सीतापतेः कर्म वक्तुं कः समर्थोऽस्ति भूतले

[1]तथापि शेमुषी मेऽस्ति वर्णयामि तवाज्ञया ।
रामस्य चरितं पुण्यं पापताप[2]विनाशनम् ॥ २४ ॥

अजादिविबुधार्थितोऽजनि चतुर्भिरंशैः कुले
रवेरजसुतादजो जगति यातुधानक्षयः ।
शिशुः [3]कुशिकजाध्वरक्षयकरक्षयो यो [4]बला-
द्वलीललितकन्धरो जयति जानकीवल्लभः ॥ २५ ॥

मुनेरनु[5]सहानुगो निखिलशस्त्र[6]विद्यातिगो
[7]ययावतिवनप्रभो जनकराजराजत्सभाम् ।
[8]विधाय जनमोहनद्युतिमतीव कामद्रुहः
प्रचण्डकरचन्द्रिका भवनभञ्जने जन्मनः ॥ २६ ॥

तमः प्रतिमतेजसं दशरथात्मजं सानुजं
मुनेरनु यथा विधेः [9]शशिवदादिदेवं परम् ।
निरीक्ष्य जनको मुदा क्षितिसुतापतिं संमतं
निजोचित[10]पणक्षमं मनसि [11]भत्र्संयन्नाययौ ॥ २७ ॥

स भूपपरिपूजितो जनकजेक्षितैरर्चितः
करालकठिनं धनुः [12]करसरोरुहे संहितम् ।
विभज्य बलवद् दृढं जय रघूद्वहेत्युच्चकै-
र्ध्वनि त्रिजगतीगतं परिविधाय रामो बभौ ॥ २८ ॥

१. क यथाधीः प्रज्ञातुल्यम्
२. घ प्रमोचनम्
३. क शकुनिकाध्वर
४. ग वशी
५. ग सहानुजो
६. क विद्यान्वितो
७. क ययावतिवलेशभो
८. क × विधाय...... जन्मनः
९. शशिवमादि
१०. क गुणक्षयम्
११. क भञ्जयन्नाययौ
१२. क करपल्लवे



ततो जनकभूपतिर्दशरथात्मजेभ्यो ददौ
चतस्र उषतीर्मुदा वरचतुभ्यं उद्वाहने ।
[1]स्वलंकृतनिजात्मजाः पथि ततो बलं भार्गवं
चकार उररी निजं रघुपतौ महोग्रं त्यजन् ॥ २९ ॥

ततः स्वपुरमागतो दशरथस्तु सीतापतिं
नृपं सचिवसंयुतो निजविचित्रसिहासने ।
विधातुममलप्रभं [2]परिचरैः [3]क्रियाकारितैः
समुद्यत[4]मतिं [5]यदा द्रुतमवारयत् केकयी ॥ ३० ॥

ततो गुरुनिदेशतो जनकराजकन्यायुतः
प्रयाणमकरोत् सुधीर्यदनुगः सुमित्रासुतः ।
वनं निजगणं त्यजन् गुहगृहे वसन्नादराद्
विसृज्य नृपलाञ्छनं रघुपतिर्जटाचीरभृत् ॥ ३१ ॥

प्रियानुजयुतस्ततो मुनिमतो वने पूजितः
स पञ्चवटिकाश्रमे [6]भरतमातुरं [7]संगतम् ।
निवार्य मरणं पितुः समवधार्य दुःखातुर-
[8]स्तपोवनगतोऽवसद् [9]रघुपतिस्ततस्ताः समाः ॥ ३२ ॥

दशाननसहोदरां विषमबाणवेधातुरां
समीक्ष्य वररूपिणीं प्रहसतीं सतीं सुन्दरीम् ।
निजाश्रयमभीप्सतीं जनकजापतिर्लक्ष्मणात्
करालकरवालतः समकरोद् विरूपां ततः ॥ ३३ ॥

१. क × स्वलंकृत......सिहासने
२. घ परिजनैः
३. ग घ क्रियाकारिभिः
४. क पतिम्
५. ग सदा
६. क भरतमातरम्
७. क संगतां गता
८. क स्ततो
९. क ग रघुपतिर्गतिर्धीमताम्

[1]समाप्य पथि दानवं खरशरैः शनैर्नाशयन्
चतुर्दशसहस्रकं समहनत् खरं [2]सानुजम् ।
दशाननवशानुगं [3]कनकचारुचश्चन्मृगं
प्रियाप्रियकरो वने समवधीद् बलाद् राक्षसम् ॥ ३४ ॥

ततो दशमुखस्त्वरंस्तमभिवीक्ष्य रामं रुषा
व्रजन्तमनुलक्ष्मणं जनकजां जहाराश्रमे ।
ततो [4]रघुवरः प्रियां [5]दलकुटीरसंस्थापितां
[6]न वीक्ष्य [7]तु विमूर्च्छितो बहु विलप्य सीतेति ताम् ॥ ३५ ॥

वने निजगणाश्रमे नगतले जले पल्वले
विचित्य पतितं खगं पथि ददर्श सौमित्रिणा ।
जटायुवचनात् ततो दशमुखाहृतां जानकीं
विविच्य [8]कृतवान् मृते पितरि वह्निकृत्यं प्रभुः ॥ ३६ ॥

[9]श्रिया विरहकातरोऽनुजपुरःसरो राघवो
धनुर्धर[10]धुरन्धरो [11]हरिबलं [12]नवालापिनम् ।
ददर्श ऋषभाचलाद् रविजवालिराजानुज-
प्रियं पवननन्दनं परिणतं हितं प्रेषितम् ॥ ३७ ॥

ततस्तदुदितं मतं पवनपुत्रसुग्रीवयो-
स्तृणाधिपतिभेदनं निजनृपासनस्थापितम् ।
विविच्य व्यवसायकैर्निजसखाप्रियं वालिनम्
निहत्य हरिभूपतिं [13]निजजनं स रामोऽकरोत् ॥ ३८ ॥

१. क समीक्ष्य
२. घ सानुगम्
३. घ कनकचारुच्चन्मृगम्
४. ग घ रघुपतिः
५. क दलकुटीषु संस्थापिताम्
६. क अलक्ष्य
७. क भुवि
८. क सुतवन्मृते पितरि
९. घ प्रियाविरह
१०. क पुरन्दरो
११. क हरिवरम्
१२. क नरालापिनम्
१३. घ निजसखम्



[1]अथोत्तरमिमां हरिर्जनकजां [2]समन्वेषयन्
जटायुसहजोदितैर्जलनिधिं तरन् वायुजः ।
[3]दशाननपुरं विशन् जनकजां समानन्दयन्
अशोकवनिकाश्रमे रघुपतिं पुनः प्राययौ ॥ ३९ ॥

ततो हनुमता बलादमितरक्षसां नाशनं
ज्वलज्ज्वलनसंकुलज्वलितदग्धलङ्कापुरम् ।
[4]विविच्य रघुनायको जलनिधिं रुषा शोषयन्
बबन्ध हरियूथपैः परिवृतो नगैरीश्वरः ॥ ४० ॥

[5]ततोऽनुजयुतो युधि प्रबलचण्डकोदण्डभृत्
शरैः खरतरैः क्रुधा गजरथाश्वहंसाकुले ।
[6]करालकरवालतः प्रबलकालजिह्वाग्रतो
निहत्य वरराक्षसान् [7]नरपतिर्बभौ सानुगः ॥ ४१ ॥

ततोऽतिबलवानरैर्गिरिमहीरुहोद्यत्करैः
करालतरताडनैर्जनकजारुषा नाशितान् ।
निजघ्नुर[8]मरार्दितानतिबलान् दशास्यानुगान्
नलाङ्गदहरीश्वराशुगसुतर्क्षराजादयः ॥ ४२ ॥

ततोऽतिबललक्ष्मणस्त्रिदशनाथशत्रुं रणे
जघान घनघोषणानु[9]गगणैरसृक्प्राशनैः ।
प्रहस्तविकटादिकानपि निशाचरान् सङ्गतान्
निकुम्भमकराक्षकान् निशितखड्गपातैः क्रुधा ॥ ४३ ॥

१. क अन्तो भुवमिमां
२. क जनकजार्थमन्वेषयन्
३. ग लङ्कां प्रविश्य
४. ग विचिन्त्य
५. घ + बभञ्ज पुरपत्तनं विविधसर्गदुर्गक्षमम् ।
निशाचरपतेः क्रुधा रघुपतिः सद्गतिः ।
६. क + ततोऽमितवलान्वितोऽङ्गदहनुमदक्षाधिपे-
विभीषणपुरःसरैर्नलपनससुग्रीवकैः
७. क रघुपतिः
८. घ अमरार्दनान्
९. क शूरगणै

ततो दशमुखो [१]रणे [२]गजरथाश्वपत्तीश्वरै-
रलङ्घ्य[३]गणकोटिभिः परिवृतो [४]युयोधायुधैः ।
कपीश्वरचमूपतेः पतिमनन्तदिव्यायुधं
[५]रघूद्वहमनिन्दितं सपदि सङ्गतो दुर्जयः ॥ ४४ ॥

दशाननमरिं ततो विधिवरस्मयावर्द्धितम्
[६]महाबलपराक्रमं [७]गिरिमिवाचलं संयुगे ।
जघान रघुनायको निशितसायकैरु[८]द्धतम्
निशाचरचमूपतिं प्रबलकुम्भकर्णं ततः ॥ ४५ ॥

तयोः खरतरैः शरैर्गगनमच्छमाच्छादितं
बभौ घनघटासमं [९]मुखरयत् तडिद्वह्निभिः ।
धनुर्गुणमहाशनिध्वनिभिरावृतं भूतलं
भयङ्करनिरन्तरं रघुपतेश्च रक्षःपतेः ॥ ४६ ॥

[१०]ततो धरणिजारुषा विविधरामबाणौजसा
पपात भुवि रावणस्त्रिदशनाथविद्रावणः ।
ततोऽतिकुतुकी हरिर्ज्वलनरक्षितां जानकीं
समर्प्य रघुपुङ्गवे [११]निजगृहं ययौ हर्षितः ॥ ४७ ॥

हरीश्वरगणावृतोऽवनिसुतायुतः सानुजो
रथे शिवसखेरिते [१२]सुविपुले लसत्पुष्पके ।

१. क ग गणे
२. ग गजरथाश्वपत्यादिभिः
३. क बाण
४. ग ययौ रोषजैः
५. ग रघुमणि
६. क धनुर्धर
७. गिरिमिवानरम्
८. क ग रुद्यतम्
९. क रमन्तउद्वन्धिभिः
१०. क × ततो··· विद्रावणः
११. घ निजपुरीं
१२. क घ + पुरन्दरकथादरः सपदि तत्र रक्षःपतिम् । बिभिषणमभीषणं समकरोत् ततो राघवः ॥
१३. घ सुविमले



मुनीश्वरगणार्चितो रघुपतिस्त्वयोध्यां ययौ
[१]विविच्य मुनिलाञ्छनं गुहगृहेऽतिसख्यं स्मरन् ॥ ४८ ॥

[२]रणे निजगणावृतो भरत[३]मातुरं सान्त्वयन्
स्वमातृगणवाक्यतः [४]पितृसिंहासने भूपतिः ।
वसिष्ठमुनिपुङ्गवैः कृतनिजाभिषेको विभुः
समस्तजनपालकः सुरपतिर्यथा संबभौ ॥ ४९ ॥

नरा बहुधनाकरा द्विजवरास्तपस्तत्पराः
स्वधर्मकृतनिश्चयाः स्वजनसङ्गता निर्भयाः ।
घनाः सुबहुवर्षिणो वसुमती सदा हर्षिता
भवत्यतिबले [५]पतौ [६]रघुपतावभूत् सज्जगत् ॥ ५० ॥

गतायुतसमाः [७]प्रियैर्निजगुणैः प्रजा रञ्जयन्
निजां रघुपतिः प्रियां [८]निजमनोभवैर्मोहयन् ।
[९]मुनीन्द्रगणसंयुतोऽप्ययजदादिदेवान् मखै-
र्धनैर्विपुलदक्षिणैरतुलवाजिमेधैस्त्रिभिः ॥ ५१ ॥

ततः किमपि कारणं मनसि भावयन् भूपति-
र्जहौ जनकजां वने [१०]रघुपतिर्यथा निर्घृणः ।
ततो निजमतं स्मरन् समनयत् प्रचेतःसुतो
निजाश्रयमुदारधी रघुपतेः प्रियां दुःखिताम् ॥ ५२ ॥

ततः कुशलवौ सुतौ प्रसुषुवे [११]जनकात्मजा
महाबलपराक्रमौ रघुपतेर्यशो[१२]गायकौ ।

१. क विमुच्य
२. घ ततो
३. ग मातरम्
४. घ पितृनिजासने
५. घ नृपे
६. क ग रघुपतो सुखं सर्वतः
७. क प्रियैर्निजबुधैः
८. ग निजभवोद्भवैर्मोहयन्
९. ग सुरेन्द्र
१०. रघुवरस्तदा
११. घ धरित्रीसुता
१२. ग घ गायनो

स तामपि सुतान्वितां मुनिवरस्तु रामान्तिके
समर्पयदनिन्दितां सुरवरैः सदा वन्दिताम् ॥ ५३ ॥

ततो रघुपतिस्तु तां सुतयुतां रुदन्तीं पुरो
जगाद दहने पुनः प्रविश शोधनायात्मनः ।
[1]इतीरितमवेक्ष्य सा रघुपतेः पदान्ते नता
विवेश [2]जननीयुता मणिगणोज्ज्वलं भूतलम् ॥ ५४ ॥

निरीक्ष्य रघुनायको [3]जनकजाप्रमाणं स्मरन्
वसिष्ठगुरुयोगतोऽनुजयुतोऽगमत् स्वं पदम् ।
पुरःस्थितजनैः स्वकैः पशुभिरीश्वरः संस्पृशन्
मुदा सरयुजीवनं रथवरैः परीतो विभुः ॥ ५५ ॥

ये शृण्वन्ति [4]रघुवीरस्य चरितं कर्णामृतं [5]सादरात्
संसारार्णवशोषणं च [6]पठतामामोददं [7]मुक्तिदम् ।
रोगाणामिह शान्तये धनजनस्वर्गादिसम्पत्तये
वंशानामपि वृद्धये प्रभवति श्रीशः परेशः प्रभुः ॥ ५६ ॥

[8]इति श्रीकल्किपुराणेऽनुभागवते [9]सूर्यवंशानुकीर्त्तने
[10]रामचरितं [11]नाम सप्तदशोऽध्यायः[12]

१. क इतीरितमति सा
२. घ जनीयुता
३. क जनकजा प्रयाताम्
४. घ रघूद्वहस्य
५. ग वर्षितम्
६. ग पठनात्मा मोदताम्
७. ग घ मोक्षदम्
८. क × इति श्री
९. घ सूर्यवंशानुवर्णने
१०. ग घ श्रीरामचन्द्रचरित्रं
११. ग × नाम
१२. ग + समाप्तः

# अष्टादशोऽध्यायः

रामात् कुशोऽभूदतिथिस्ततोऽभून्निषधान्नभः ।
तस्मादभूत् पुण्डरीकः क्षेमधन्वाऽभवत् ततः ॥ १ ॥
देवानीकस्ततो हीनः [1]परिपात्रोऽर्हतस्ततः ।
[2]बलाहकस्ततोऽर्कश्च [3]वज्रनाभस्ततोऽभवत् ॥ २ ॥
[4]खगणाद्विधृतस्तस्मा[5]द्धिरण्यनाभसञ्ज्ञितः ।
ततः [6]पुष्पाद् ध्रुवस्तस्मात् स्यन्दनोऽथाग्निवर्णकः ॥ ३ ॥
तस्माच्छीघ्रोऽभवत् [7]पुत्रः पिता मेऽतुलविक्रमः ।
तस्मात् मरुं मां केऽपीह बुधं चापि सुमित्रकम् ॥ ४ ॥
कलापग्राम[8]मासाद्य विद्धि सत्तपसि स्थितम् ।
तवावतारं [9]विदित्वा व्यासात् सत्यवतीसुतात् ।
प्रतीक्ष्य कालं लक्षाब्दं कलेः प्राप्तस्तवान्तिकम् ॥ २ ॥
जन्मकोट्यहंसां राशेर्नाशनं धर्मशासनम् ।
यशःकीर्त्तिकरं सर्वकामपूरं परात्मनः ॥ ६ ॥

[10]**कल्किरुवाच**

[11]ज्ञातस्तवान्वयस्त्वं च सूर्यवंशसमुद्भवः ।
द्वितीयः कोऽपरः श्रीमान् महापुरुषलक्षणः ॥ ७ ॥

१. घ परिपात्रोऽथ दीनतः
२. क बलात्स्थलः
३. ग घ रजनाम
४. ग ततोऽभूद्विधृतिः
५. ग हिरण्योनामसंज्ञिकः
६. ग पुष्पाह्वयस्तस्मात्
७. क ग तत्र
८. ग संप्राप्य
९. घ विज्ञाय
१०. ग ×
११. क ज्ञातं तवान्वयं त्वाश्च

इति कल्किवचः श्रुत्वा देवापिर्मधुराक्षराम् ।
[1]वाणीं विनयसम्पन्नः प्रवक्तुमुपचक्रमे ॥ ८ ॥

### देवापिरुवाच

प्रलयान्ते नाभिपद्मान्तावाभूच्चतुराननः ।
[2]तदीयतनयादत्रेश्चन्द्रस्तस्मात्ततो बुधः ॥ ९ ॥
तस्मात् पुरूरवा जज्ञे ययातिर्नाहुषस्ततः ।
देवयान्यां ययातिस्तु यदुं तुर्वसुमेव च ॥ १० ॥
शर्मिष्ठायां [3]ततो द्रुह्युश्चा[4]नुं पूरुं च सत्पते ।
जनयामास भूतादिर्भूतानीव सिसृक्षया ॥ ११ ॥
पूरोर्जन्मेजयस्तस्मात् [5]प्रचिन्वानभवत्ततः ।
प्रवीरस्तन्म[6]नस्युर्वै [7]तस्माच्चाभयदोऽभवत् ॥ १२ ॥
[8]उरुक्षयाच्च [9]त्र्यरुणिस्ततोऽभूत् पुष्करा[10]रुणिः ।
बृहत्क्षेत्रादभूद्धस्ती यन्नाम्ना हस्तिनापुरम् ॥ १३ ॥
अजमीढोऽहिमीढश्च पुरमीढस्तु तत्सुताः ।
अजमीढादभूदृक्षस्तस्मात् संवरणात् कुरुः ॥ १४ ॥
कुरोः परिक्षित् सुधनुर्जह्नुर्निषध एव च ।
सुहोत्रोऽभूत् सुधनुषश्च्यवनाच्च ततः कृती ॥ १५ ॥
ततो बृहद्रथस्तस्मात् कुशा[11]ग्रादृषभोऽभवत् ।
ततः सत्यजितः पुत्रः पुष्पवान्नहुषस्ततः ॥ १६ ॥

१. क × वाणीं······उपचक्रमे
२. क तदीक्षणजलादत्रिश्चन्द्रः
३ घ तथा
४. चाणुम्
५. क प्राचिन्वान्
६. क मनस्यर्के
७. क तस्माचारु यादाऽभवत्
८. क दुरितययाच्च
९. क तरुणी
१०. क पुष्करारुणिः
११. क कुशात् प्रीतिसहोऽभवत्



बृहद्रथान्यभार्यायां जरासन्धः परन्तपः ।
सहदेवस्ततस्तस्मात् सोमापिर्यच्छ्रुतश्रवाः ॥ १७ ॥
सुरथाद् विरथस्तस्मात् सार्वभौमोऽभवत्ततः ।
जयसेनाद्रथानीकोऽभूद्युतायुश्च कोपनः ॥ १८ ॥
तस्माद्देवातिथिस्तस्मादृक्षस्तस्मात् [1]प्रदीपकः ।
तस्मात् प्रतीपकाज्जातो देवापिरहमीश्वर ॥ १९ ॥
राज्यं शान्तनवे दत्त्वा तपस्येकधिया [2]चिरम् ।
[3]कलापग्राममासाद्य [4]त्वां दिदृक्षुरिहागतः ॥ २० ॥
[5]मरुणानेन मुनिभिरेभिः [6]लब्ध्वा पदाम्बुजम् ।
तव कालकरालास्याद् यास्याम्या[7]त्मवतां पदम् ॥ २१ ॥
[8]तयोरेवं वचः श्रुत्वा [9]भगवान् पद्मलोचनः ।
प्रहस्य मरुदेवापी समाश्वास्य समब्रवीत् ॥ २२ ॥

### [10]कल्किरुवाच

युवां [11]परमधर्मज्ञौ राजानौ विदितावुभौ ।
[12]ममादेशमनुसृत्य [13]निजराज्यं [14]भरिष्यथः ॥ २३ ॥
[15]अहं त्वामभिषेक्ष्यामि निजायोध्यापुरेऽधुना ।
हत्वा म्लेच्छानधर्मिष्ठान् प्रजा[16]भूतादिहिंसकान् ॥ २४ ॥

१. घ दिलीपकः
२. ग सुखम्
३. ग कलापग्रामं संप्राप्य
४. ग आगतोऽस्मि इहात्र भो
५. ग मुनिसङ्घैः समावृतः
६. घ प्राप्य
७. क नात्मवताम्
८. क ततो देववचः, ग तयोर्वचनं निशम्य
९. कल्किः कमललोचनः
१०. ग ×
११. ग परमम्मर्मज्ञौ
१२. घ मदादेशकरौ भूत्वा
१३. क द्विधा राज्यम्, ग स्वराज्यं
१४. ग पालयिष्यथः
१५. घ मरो
१६. घ भूतविहिंसकान्

देवापे तव राज्ये त्वां हस्तिनापुरपत्तने ।
अभिषेक्ष्यामि राजर्षे हत्वा [1]पुक्कसकान् रणे ॥ २५ ॥
[2]मथुरायां समागत्य हरिष्यामि तु वो [3]भयम् ।
[4]शय्याकर्णानुष्ट्रमुखानेकजङ्घान् विनोदरान् ॥ २६ ॥
हत्वा कृतं युगं कृत्वा [5]पालयिष्याम्यहं प्रजाः ।
तपोवेशं व्रतं त्यक्त्वा समारुह्य रथोत्तमम् ॥ २७ ॥
युवां शस्त्रास्त्रकुशलौ सेनागणपरिच्छदौ ।
भूत्वा महारथौ लोके मया सह चरिष्यथः ॥ २८ ॥
विशाखयूपभूपालस्तनयां विनयान्विताम् ।
विवाहे [6]चानवद्याङ्गीं सुन्दरीं त्वां प्रदास्यति ॥ २९ ॥
[7]साधो भूपाल लोकानां [8]सुखाय पालय वचः ।
[9]रुचिराश्वसुतां शान्तां देवापे त्वं समुद्वह ॥ ३० ॥
इत्याश्वासकथा[10]स्तस्य श्रुत्वा तौ मुनिभिः सह ।
विस्मयाविष्ट[11]हृदयौ मेनाते [12]स्वयमीश्वरम् ॥ ३१ ॥
[13]इति ब्रुवत्यभयदे आकाशात् सूर्यसन्निभौ ।
रथौ नानामणिव्रातघटितौ कामगौ पुरः ।
समायातो ज्वलद्दिव्यशस्त्रास्त्रैः परिवारितौ ॥ ३२ ॥
ददृशुस्ते सदो मध्ये विश्वकर्मविनिर्मितौ ।
[14]भूपा मुनिगणाः सभ्याः सहर्षाः [15]किमितीरिताः ॥ ३३ ॥

---

१. क पुक्कलान् वने
२. घ मथुरायामहं स्थित्वा
३. क लयम्
४. क रज्ज्वाकारानुष्ट्रामुखान्
५. ग रक्षयिष्याम्यहं
६. घ रुचिरापाङ्गीं
७. ग मरुभूपाल
८. ग घ स्वस्तये कुरु मे वचः
९. क रुधिराश्वसुताम्
१०. घ कल्केः
११. क मनसौ
१२. घ हरिमीश्वरम्
१३. क इतिब्रुवत्याभयादेशा
१४. क × भूपा ···· किमितीरिताः
१५. ग किमितीरिणः



[1]कल्किरुवाच

[2]युवामादित्यसोमेन्द्रयम[3]वैश्रवणाङ्गजौ ।
राजानौ लोकरक्षार्थमाविर्भूतौ विदन्त्यमी ॥ ३४ ॥
[4]कालेनाच्छादिताकारौ मम सङ्गादिहोदितौ ।
युवां रथमारुहतां शक्रदत्तं [5]ममाज्ञया ॥ ३५ ॥
एवं वदति [6]देवे तु पद्मनाभे सनातने ।
[7]देवाश्च ववर्षुः कुसुमैस्तुष्टुवुर्मुनयोऽग्रजाः ॥ ३६ ॥
गङ्गावारिपरिक्लिन्नशिरोभूतिपरागवान् ।
शनैः पर्वतजासङ्ग[9]शीतलपवनो ववौ ॥ ३७ ॥
तत्रायातः [10]प्रमुदिततनुस्तप्तचामीकराभो
धर्मावासः सुरुचिरजटाचीरभृद्दण्डहस्तः ।
लोकातीतो निजतनुमरुन्नाशिताधर्मसङ्घ-
स्तेजोराशिः सनकसदृशो मस्करी पुष्कराक्षः ॥ ३८ ॥

[11]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[12]चन्द्रवंशानुकीर्तनं [13]नाम अष्टादशोऽध्यायः[14] ।

---

१ ग ×
२. क युवामादिश्च
३. ग वैश्रवणाङ्गकौ
४. क समयेनावृताकारौ
५. क नृपाज्ञया
६. ग घ विश्वेशे
७. ग घ देवा ववर्षुः
८. घ मुनयोऽग्रतः
९. घ शिववत्
१०. क प्रमुदितमुखः
११. क × इति श्री
१२. घ चन्द्रसूर्य
१३. ग × नाम
१४. ग + समाप्तः

# ऊनविंशोऽध्यायः

## [1]सूत उवाच

अथ कल्किः [2]समालोक्य सदसां पतिभिः सह ।
समुत्थाय ववन्दे तं पाद्यार्घ्याचमनादिभिः ॥ १ ॥
[3]वृद्धं संवेश्य तं भिक्षुं सर्वाश्रम[4]मनोहरम् ।
पप्रच्छ को भवानत्र [5]भाग्यबलेन संप्राप्तः ॥ २ ॥
प्रायशो मानवा लोके लोकानां [6]पारणेच्छया ।
चरन्ति सर्वे [7]जन्तवः पूर्णा विगतकल्मषाः ॥ ३ ॥

## [8]मस्कर्युवाच

अहं कृतयुगं श्रीश तवादेशकरं परम् ।
तवाविर्भावविभवमीक्षणार्थमिहागतम् ॥ ४ ॥
निरुपाधिर्भवान् कालः सोपाधित्वमुपागतः ।
क्षणदण्डल[9]वाद्यङ्गैर्मायया रचितं त्वया ॥ ५ ॥
पक्षाहोरात्रमासर्त्तु संवत्सरयुगादयः ।
[10]तवेक्षणेन [11]गच्छन्ति मनवश्च चतुर्दश ॥ ६ ॥
स्वायम्भुवस्तु प्रथमस्ततः स्वारोचिषो मनुः ।
तृतीय उत्तमस्तावच्चतुर्थस्तामसः स्मृतः ॥ ७ ॥

१. घ शुक
२. ग समालोच्य
३. क दृष्ट्वा सम्पूजितं भिक्षुम्
४. घ मनोरमम्
५. घ मम भाग्यादिहागतः
६. क पावनेच्छया
७. घ सुहृदः
८. क कृत्य उवाच, ग ×
९. क लवादण्डैर्मायया जायया त्वया
१०. घ तवेक्षया चरन्त्येते
११ ग भ्रमन्ति



पञ्चमो रैवतः षष्ठश्चाक्षुषः परिकीर्त्तितः ।
वैवस्वतः सप्तमो वै ततः सावर्णिरष्टमः ॥ ८ ॥
नवमो दक्षसावर्णिर्ब्रह्मसावर्णिकस्ततः ।
दशमो धर्मसावर्णिरेकादशः स उच्यते ॥ ९ ॥
रुद्रसावर्णिकस्तत्र मनुर्वै द्वादशः स्मृतः ।
त्रयोदशमनुर्वेदसावर्णिर्लोकविश्रुतः ॥ १० ॥
चतुर्दशेन्द्रसावर्णिरेते तव विभूतयः ।
[1]यान्यायान्ति [2]प्रकाशन्ते [3]नामरूपादिभेदतः ॥ ११ ॥
[4]द्वादशाब्दसहस्रेण देवानां च चतुर्युगम् ।
चत्वारि त्रीणि द्वे चैकं सहस्रगणितं [5]तथा ॥ १२ ॥
तावच्छतानि चत्वारि त्रीणि द्वे चैकमेव हि ।
सन्ध्याक्रमेण[6] तेषां तु सन्ध्यांशोऽपि तथाविधः ॥ १३ ॥
[7]अहोरात्रं च [8]पक्षौ च माससंवत्सरर्तवः ।
सदुपाधिकृतः कालो ब्रह्मणो [9]जन्ममृत्युकृत् ॥ १४ ॥
शतसंवत्सरे ब्रह्मा [10]त्वय्येव विलयं याति ।
लयान्ते त्वन्नाभिमध्यादु[11]त्थितः सृजति प्रभुः ॥ १५ ॥

१. क यातायाते, ग गच्छन्त्येते
२. ग च भिद्यन्ते
३. ग नामैश्वर्यादि
४. ग द्वादशाब्दसहस्राख्यो देवानां युग उच्यते
५. घ मतम्
६. सन्ध्यांशस्तावदेव युगे प्रभो
७. घ + एकसप्ततिकं तत्र युगं भुङ्क्ते मनुर्भुवि ।
मनूनामपि सर्वेषामेवं परिणतिर्भवेत् ।
दिवा प्रजापतेस्तत्तु निशा सा परिकीर्त्तिता ।
८. घ पक्षस्ते
९. क ग जन्ममृत्युतः
१०. घ लयं प्राप्नोति हि त्वयि
११. ग उत्थितश्च सृजत्यसौ

तत्र कृतयुगान्तेऽहं कालं सद्धर्मपालकम् ।
कृतकृत्याः प्रजा यत्र तन्नाम्ना मां कृतं [1]विभो ॥ १६ ॥

[2]तस्य वाक्यं समाकर्ण्य कल्किर्निजजनावृतः ।
प्रहर्षमतुलं [3]लेभे श्रुत्वा [4]तद्वचनामृतम् ॥ १७ ॥

अवहित्थमुपालक्ष्य [5]युगस्याह जनान् हि तान् ।
योद्धुकामः कलेः पुर्यां हृष्टो विशसने प्रभुः ॥ १८ ॥

गजरथतुरगान् नरांश्च योधान्
कनकविचित्रविभूषणाचिताङ्गान् ।
धृत विविधवेरास्त्रशस्त्रपूगान्
युधिनिपुणान् गणयध्वमानयध्वम् ॥ २० ॥

[6]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
कृतयुगागमनं [7]नाम एकोनविंशतितमोऽध्यायः[8]

१. घ विदुः
२. घ इति तद्वच आश्रुत्य
३. घ लब्ध्वा
४. क ग घ
५. क न चास्याह निजान् जनान्
६. क × इति श्री
७. ग × नाम
८. ग + समाप्तः



# विंशोऽध्यायः

## सूत उवाच

[1]अतस्तौ मरुदेवापी [2]पालयित्वा वचः [3]पुनः ।
कृतोद्वाहौ रथारूढौ समायातौ [4]महाबलौ ॥ १ ॥
नानायुधधरैः सैन्यैरावृतौ [5]शूरमानिनौ ।
बद्धगोधाङ्गुलित्राणौ दंशितौ बद्धहस्तकौ ॥ २ ॥
कार्ष्णायसशिरस्त्राणौ धनुर्द्धरधुरन्धरौ ।
अक्षौहिणीभिः षड्भिस्तु कम्पयन्तौ भुवं भरैः ॥ ३ ॥
विशाखयूपभूपस्तु गजलक्षैः समावृतः ।
अश्वैः सहस्रनियुतैः रथैः सप्तसहस्रकैः ॥ ४ ॥
पदातिभिर्द्विलक्षैश्च सन्नद्धैर्धृतकार्मुकैः ।
[6]वातोद्धतोत्तरोष्णीषैः सर्वतः परिवारितः ॥ ५ ॥
रुधिराश्वसहस्राणां पञ्चाशद्भिर्महारथैः ।
गजैर्दशशतैर्मत्तैर्नवलक्षैर्वृतो बभौ ॥ ६ ॥
अक्षौहिणीभिर्दशभिः [7]भगवान् परदुर्धरः ।
समावृतस्तथा देवैरेवमिन्द्रो दिवि स्वराट् ॥ ७ ॥
भ्रातृपुत्र[8]सुहृद्भिश्च मुदितः सैनिकैर्वृतः ।
ययौ [9]दिशां जयाकाङ्क्षी [10]सर्वेषामीश्वरः प्रभुः ॥ ८ ॥

१. घ इति तौ
२. ग घ श्रुत्वा कल्केः
३. घ पुरः
४. ग घ महाभुजौ
५. ग सुरमानिनौ
६. क वातोद्धतां करोष्णीषैः
७. घ कल्किः परपुरञ्जयः
८. क. सुहृद्भिस्तु
९. घ दिग्विजयाकाङ्क्षी
१०. घ जगतामीश्वरः

काले तस्मिन् द्विजो भूत्वा धर्मः परिजनैः सह ।
समाजगाम कलिना बलिनापि निराकृतः ॥ ९ ॥
ऋतं प्रसादमभयं सुखं [1]मदसमुद्भवम् ।
[2]योगमर्थं [3]ततोऽदर्पं स्मृतिं क्षेमं प्रतिश्रयम् ॥ १० ॥
नरनारायणौ चोभौ हरेरंशौ तपोव्रतौ ।
धर्मस्त्वेतान् समादाय पुत्रान् स्त्रीश्चा[4]गतस्त्वरन् ॥ ११ ॥
श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः ।
बुद्धिर्मेधा[5]तितिक्षा च ह्रीर्मूर्तिर्धर्मपालकाः ॥ १२ ॥
[6]एतास्तेन सहायाता निजबन्धुगणैः सह ।
कल्किमालोकितुं तत्र निजकार्यं निवेदितुम् ॥ १३ ॥
कल्कि[7]द्विजवरं प्राप्य प्रपूज्य च यथाविधि ।
प्रोवाच [8]विनयोपेतः कस्त्वं [9]कस्मादिहागतः ॥ १४ ॥
स्त्रीभिः पुत्रैश्च सहितः क्षीणपुण्य इव ग्रहः ।
कस्य वा विषयाद् राज्ञ[10]स्तत् सर्वं वद [11]तत्त्वतः ॥ १५ ॥
[12]दीनपुत्रा अतिदीना हीनस्वबलपौरुषाः ।
वैष्णवाः साधवो यद्वद् [13]बौद्धैर्नाम तिरस्कृताः ॥ १६ ॥
[14]इत्थं कल्किवचः श्रुत्वा धर्मः शर्म निजं स्मरन् ।
प्रोवाच [15]कमलानाथमनाथस्त्वतिकातरः ॥ १७ ॥

---

१. ग घ मुदमुथ स्वयम्
२. ग योगदर्पणम्
३. क ग ततोऽर्थं च
४. क ग चागमत्
५. धृतिः क्षान्तिः
६. क एताः सुतैः सह समाजग्मुर्धर्मयुक्ता
७. घ द्विजं समासाद्य प्रपूज्य च
८. विनयापन्नः
९. ग कथं चेहागतः
१०. ग घ तत् तत्त्वं
११. घ तावतः
१२. ग घ पुत्राः स्त्रियश्च ते दीना
१३ घ पाषण्डैश्च
१४. घ कल्केरिति वचः
१५. क कमलानाथं स्वनाथमतिकातरः



पुत्रैः स्त्रीभिर्निज[1]गणैः कृताञ्जलिपुटैर्हरिम् ।
[2]स्तुतिप्रणाममन्त्रेण पूजयित्वा दयापरम् ॥ १८ ॥

### [3]धर्म उवाच

शृणु कल्के ममाख्यानं धर्मोऽहं [4]ब्रह्मरूपिणः ।
[5]तव वक्षःस्थलाज्जातः कामदः सर्वदेहिनाम् ॥ १९ ॥
[6]देवानामग्रणीर्हव्यकव्यानां [7]कामधुक् प्रभुः ।
तवाज्ञया चराम्येव [8]साधूनां कीर्तिमाचरन् ॥ २० ॥
[9]निराकृतोऽस्मि साम्प्रतं कलिना बलशालिना ।
[10]शाकैः काम्बोजशबरैः [11]सर्वैरावासवासिभिः ॥ २१ ॥
अधुना तेऽखिलाधारपादमूलं [12]समाश्रिताः ।
यथा संसारकालाग्निसंतप्ताः साधवोऽर्दिताः ॥ २२ ॥
इति वाग्भिरपूर्वाभिर्धर्मेण परितोषितः ।
[13]कलिकालुष्यहरः कल्किर्धीमान् भूयो जगाद सः ॥ २३ ॥
धर्म [14]कृतयुगं [15]पश्य मरुं चण्डांशुवंशजम् ।
मां जानासि यथा जातं धातृप्रार्थितविग्रहम् ॥ २४ ॥
अवैष्णवानामन्येषां तवोपद्रवकारिणाम् ।
[16]जिघांसुर्यामि [17]सेनाभिश्चर गां [18]च [19]सुनिर्भयः ॥ २५ ॥

---

१. ग जनैः
२. घ स्तुत्वा नत्वा पूजयित्वा मुदितं तं दयापरम्
३. ग ×
४. क धर्मरूपिणाम्
५. क × तव ··· सर्वदेहिनाम्
६. क × देवानामाचरन्
७. घ कामधुग् विभुः
८. घ साधुकीर्तिकृदन्वहम्
९. ग घ सोऽहं कालेन बलिना कलिनापि निराकृतः
१०. घ शक
११. घ सर्वैरावासवासिना
१२. ग घ उपागताः
१३. घ कल्किः कल्कहरः श्रीमानाह संहर्षयञ्छनैः
१४. क कृतयुगो
१५. ग देवो
१६. घ + कीटकैर्बौद्धदलनमिति मत्वा सुखी भव ।
१७. क तेजोभिः
१८. घ त्वं
१९. घ विनिर्भयः

का भीतिस्ते क मोहोऽस्ति यज्ञदान[1]तपोव्रतैः ।
सहितैः संचर विभो मयि [2]सत्ये व्युपस्थिते ॥ २६ ॥
[3]त्वामेवानुगच्छाम्यहं स्वपुत्रैर्बान्धवैः सह ।
[4]दिशां जयार्थं [5]च शत्रुनिग्रहार्थं [6]जगत्प्रिय ॥ २७ ॥

इति [7]तस्य वचः श्रुत्वा धर्मः परमहर्षितः ।
गन्तुं कृतमतिस्तेन [8]आधिपत्यममुं स्मरन् ॥ २८ ॥

[9]सन्नद्धः साधुसत्कारैर्वेदब्रह्ममहारथः ।
नानाशास्त्रान्वेषणेषु [10]संकल्पवरकार्मुकः ॥ २९ ॥

सप्तस्वराश्वो भूदेवसारथिर्वह्निराश्रयः ।
क्रियाभेदबलोपेतः प्रययौ [11]कलिनाशकः ॥ ३० ॥

यज्ञदानतपःपात्रैर्यमैश्च [12]नियमादिभिः ।
[13]खशकाम्बोजकान् सर्वान् शबरान् [14]बर्बरानपि ॥ ३१ ॥

जेतुं कल्किर्ययौ [15]तत्र कलेरावासमीप्सितम् ।
भूतवासबलोपेतं सारमेय[16]वराकुलम् ॥ ३२ ॥

गोमांसपूतिगन्धाढ्यं काकोलूकशिवावृतम् ।
[17]नारीणां द्यूतकलह[18]विवादव्यसनाश्रयम् ॥ ३३ ॥

---

१. तपोधनैः
२. ग शास्त्रे उपस्थिते
३. घ अहं यामि त्वयागच्छ
४. घ विशां
५. ग त्वं
६. ग भृशं पुनः
७. ग घ कल्के:
८. क स्वाधिपत्यमनुस्मरन्
९. घ + सिद्धाश्रमे निजजनानवस्थाप्य स्त्रियश्च ताः
१० क संकल्पाबद्धकार्मुकाः
११. घ धर्मनायकः
१२. ग घ नियमैर्वृतः
१३. क शककाम्बोज
१४. क बर्बरांस्तथा
१५. घ यत्र
१६. ग कुलान्वितम्
१७. घ स्त्रीणां
१८. क विवादविषयाश्रयम्



घोरं जगद्भयकरं कामिनीस्वामिनं गृहम् ।
कलिः श्रुत्वोद्यमं कल्केः [1]पुत्रपौत्रवृतः क्रुधा ॥ ३४ ॥
पुराद् विशसनात् [2]प्रागात् [3]पेचकाक्षरथोपरि ।
[4]ददर्श पुरतो धर्मस्तं कलिं घोरदुर्मदम् ॥ ३५ ॥

युयुधे तेन [5]सहसा कल्किवाक्य[6]प्रचोदितः ।
ऋतेन दम्भः संग्रामे प्रसादो लोभमाह्वयत् ॥ ३६ ॥

समयादभयं क्रोधो भयं सुखमुपाययौ ।
निरयो मुदमासाद्य युयुधे [7]च महाहवे ॥ ३७ ॥

आधिर्योगेन च व्याधिः क्षेमेण सह [8]सत्वरम् ।
प्रश्रयेण [9]सह ग्लानिर्जरा स्मृतिमुपाह्वयत् ॥ ३८ ॥

[10]प्रवृत्ते च महाघोरे युद्धे परमदारुणे ।
तं द्रष्टुमागता [11]देवा ब्रह्माद्याः खे विभूतिभिः ॥ ३९ ॥

मरुः खशैश्च [12]काम्बोजैर्युयुधे भीमविक्रमैः ।
देवापिः [13]समरे चीनैर्बर्बरैस्तद्गणै[14]रिह ॥ ४० ॥

विशाखयूपभूपालः पुलिन्दैः श्वपचैः सह ।
युयुधे विविधैः शस्त्रैरस्त्रैर्दिव्यैर्महाप्रभैः ॥ ४१ ॥

कल्किः कोकविकोकाभ्यां वाहिनीभिर्वरायुधैः ।
तौ तु कोकविकोकौ च ब्रह्मणो वरदर्पितौ ॥ ४२ ॥

---

१. ग स्वपुत्रादिवृतः
२. घ प्रायात्
३. ग ये च
४. घ धर्मः कलिं समालोक्य ऋषिभिः परिवारितः
५. ग बलिना
६. क प्रणोदितः
७. ग घ विविधायुधैः
८. घ बलीयसा
९. घ तथा
१०. घ एवं वृत्तो महाघोरो युद्धः परमदारुणः
११. क सर्वे
१२. क कवतैः
१३. क ग शबरैश्चोलैः
१४. घ अपि

भ्रातरौ दानवश्रेष्ठौ [1]प्रमत्तौ च गजाविव ।
एकरूपौ [2]महाकायौ देवभयविवर्द्धकौ ॥ ४३ ॥

[3]पदातिकौ गदाहस्तौ [4]महाभुजौ महाबलौ ।
शुम्भैः परिवृतौ मृत्युजितावेकत्र योधनात् ॥ ४४ ॥

[5]हेषितैर्बृंहितैर्दन्तशब्दैष्टङ्कारनादितैः ।
शूरोत्क्रुष्टैर्बाहुवेगैः संशब्दस्तलताडनैः ॥ ४५ ॥

[6]संपूरिता दिशः सर्वा [7]लोकाश्च भयपीडिताः ।
[8]भयार्दिता देवसङ्घा दिवि [9]व्यस्तपथा ययुः ॥ ४६ ॥

[10]पाशैर्दण्डैः खड्गशक्त्यृष्टिशूलैर्गदाघातैर्बाणपातैश्च घोरैः ।
युद्धे शूराश्छिन्नबाह्वङ्घ्रिमध्याः पेतुः संख्ये शतशः कोटिशश्च ॥४७॥

[11]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये [12]कल्किसंग्रामो
[13]नाम विंशोऽध्यायः[14] ।

१. घ मत्तौ युद्धविशारदौ
२ घ महासत्त्वौ देवभयविवर्द्धकौ
३. क पदातिनौ
४. ग घ वज्राङ्गौ जयिनौ दिशाम्
५. घ + ताभ्यां स युयुधे कल्किः सेनागणसमन्वितः ।
शुभानां कल्किसैन्यानां समरस्तुमुलोऽभवत् ।
६. घ आलोड़िता
७. ग घ लोका नो शर्म लेभिरे
८. घ देवाश्च भयसंत्रस्ता
९. ग व्यस्तरवा
१०. ग पाशैः कुन्तैः
११. क × इति श्री
१२. कल्किसेनासंग्रामो
१३. ग × नाम
१४. ग + समाप्तः

# एकविंशोऽध्यायः

## सूत उवाच

[1]संप्रवृत्तेऽथ संग्रामे घर्मः परमकोपनः ।
कृतेन सहितो [2]भीमं युयुधे कलिना सह ॥ १ ॥

[3]कलिरमित्रबाणौघैर्धर्मस्यापि कृतस्य [4]तु ।
पराभूतः पुरीं [5]प्रागात् त्यक्त्वा गर्दभवाहनम् ॥ २ ॥

विच्छिन्नपेचकरथः [6]देहो रक्तानुरञ्जितः ।
[7]विकीर्णशूकरगन्धः स्त्रीस्वामिकमगाद् गृहम् ॥ ३ ॥

दम्भः सम्भोगरहितोद्धृ[8]तबाणगणाहतः ।
व्याकुलः स्वकुलाङ्गारो निःसारः प्राविशद् गृहम् ॥ ४ ॥

[9]प्रसादताडितो लोभो गदया [10]छिन्नमस्तकः ।
सारमेयरथं [11]छिन्नं [12]त्यक्त्वागाद् भवनं द्रुतम् ॥ ५ ॥

अभयेन जितः क्रोधः कषायीकृतलोचनः ।
गन्धाखुवाहं विच्छिन्नं त्यक्त्वा विशसनं गतः ॥ ६ ॥

[13]भयं सुखतलाघाताद् गतासुर्न्यपतद् भुवि ।
निरयो [14]मुदमुष्टिभ्यां पीडितो यममाययौ ॥ ७ ॥

१. ग घ एवं प्रवृत्ते
२. ग घोरं
३. क कलिर्ज्वलितबाणौघैः
४. घ च
५. ग घ प्रायात्
६. घ स्रवद्रक्ताङ्गसंचयः
७. घ छछुर्गन्धः करालास्यः
८. क धृतबाणगणाहतः
९. घ लोभः
१०. ग भिन्नः
११. क भग्नम्
१२. ग घ त्यक्त्वागाद् रुधिरं वमन्
१३. क भयो
१४. क गदा

[1]आधिव्याधिव्यथादयस्त्यक्त्वावाहमुपाद्रवन् ।
नानादेशान् भयोद्विग्नकृतबाणप्रपीडिताः ॥ ८ ॥

धर्मः कृतेन सहितो [2]गत्वा विशसनं कलेः ।
नगरं बाणदहनैर्ददाह कलिना सह ॥ ९ ॥

कलिर्विप्[3]लुतसर्वाङ्गो मृतदारो [4]हतप्रजः ।
जगामैको [5]भयत्रस्तो वर्षान्तरमलक्षितः ॥ १० ॥

मरुस्तु शककाम्बोजान् जघ्ने दिव्यास्त्रतेजसा ।
देवापिः शबरांश्चोलान् बर्बरांस्तद्गणानपि ॥ ११ ॥

दिव्यास्त्रशस्त्रसम्पातै[6]रर्दयामास वीर्यवान् ।
विशाखयूपभूपालः पुलिन्दान् पुक्कसानपि ॥ १२ ॥

जघान विमलप्रज्ञः [7]गदाघातेन भूरिणा ।
नाना[8]खरशरवर्षैर्योधा नेशुरनेकधा ॥ १३ ॥

कल्किः कोकविकोकाभ्यां गदापाणि[9]र्महाबली ।
युयुधे [10]समराभिज्ञो लोकानां जनयन् भयम् ॥ १४ ॥

[11]वृकासुरस्य पुत्रौ तौ नप्तारौ शकुनेर्हरिः ।
तयोः कल्किः स युयुधे मधुकैटभयो[12]रिव ॥ १५ ॥

तयोर्गदाप्रहारेण चूर्णिताङ्गस्य तत्पतेः ।
[13]कराच्च्युतापतद् भूमौ [14]दृष्ट्वोचुरित्यहो जनाः ॥ १६ ॥

१. घ आधिव्यथादयः सर्वे
२. क कृत्वा
३. ग विप्लुष्ट
४. मृतप्रजः
५. ग घ रुदन् दीनो
६. क दमयामास
७. घ खड्गपातेन
८. घ अस्त्रशस्त्र
९. ग युधां पतिः
१०. घ विन्यासविज्ञो
११. क विकासुरस्य
१२. घ यथा
१३. क कराद् गदा
१४. क तदद्भुतमिवाभवत्



ततः पुनः क्रुधा विष्णुर्जगज्जिष्णु[1]र्महाबली ।
[2]भल्लकेन शिरस्तस्य विकोकस्याच्छिनत् प्रभुः ॥ १७ ॥

मृतो विकोकः कोकस्य दर्शनादुत्थितो [3]वरः ।
[4]देवा विस्मयमापन्ना दृष्ट्वा तस्य पराक्रमम् ॥ १८ ॥

[5]प्रतिकाराय धावतः कोकस्याप्यच्छिनच्छिरः ।
मृतः कोको विकोकस्य दृष्टिपातात् समुत्थितः ॥ १९ ॥

पुनस्तौ मिलितौ [6]तत्र युयुधाते महाबलौ ।
[7]स्वेच्छया धृतरूपिणौ कालमृत्यू इवापरौ ॥ २० ॥

[8]चर्मणाच्छादितौ देहौ प्रहरन्तौ पुनः पुनः ।
कल्किः क्रुधा तयोस्तद्वद् बाणेन शिरसी हते ॥ २१ ॥

[9]पुनर्लग्ने समालोक्य हरिश्चिन्तापरोऽभवत् ।
[10]विसत्त्वत्वमथालोक्य तुरगस्तावताडयत् ॥ २२ ॥

[11]महाभीमौ दुष्प्रधर्षौ तुरगेणार्दितौ भृशम् ।
कल्केस्तं जघ्नतुर्बाणैरमर्षाताम्रलोचनौ ॥ २३ ॥

तयोर्भुजान्तरं सोऽश्वः क्रुधा समदशद् [12]भृशम् ।
तौ तु प्रभिन्नास्थिभुजौ विशस्ताङ्गदकार्मुकौ ।
[13]पुच्छं जगृहतुः सप्तेर्गोपुच्छं बालकाविव ॥ २४ ॥

धृतपुच्छौ तु [14]विज्ञाय सप्तिः परमकोपनः ।
पश्चात् पद्भ्यां [15]दृढं जघ्ने तयोर्वक्षसि [16]सत्वरम् ॥ २५ ॥

१. घ महाभुजः
२. क नन्दकेन
३. घ बली
४. घ तद् दृष्ट्वा विस्मिता देवाः कल्किश्च परवीरहा
५. ग घ प्रतिकर्तुं गदापाणेः
६. घ तेन
७. घ कामरूपधरौ वीरौ
८. ग घ खड्गचर्मधरौ कल्कि
९. क संलग्ने च
१०. क विसहत्वं समालोक्य
११. ग घ कालकल्पौ दुराधर्षौ
१२. क. व्रतम्
१३. क + क्रुधा समतयोस्तद्वद् वाणेन शिरसी हते
१४. ग तौ ज्ञात्वा
१५. क जवम्
१६. घ वज्रवत्

त्यक्तपुच्छौ मूर्च्छितौ [1]तौ तत्क्षणात् पुनरुत्थितौ ।
[2]स्फुटां वाणीं बभाषाते सजीवाविव देहिनौ ॥ २६ ॥
ततो ब्रह्मा [3]समागत्य कृताञ्जलिपुटः शनैः ।
प्रोवाच कल्किं नैवामू शस्त्रास्त्रैर्वधमर्हतः ॥ २७ ॥
[4]कराघातादेककाले उभयोर्निर्मितो वधः ।
उभयोर्दर्शनादेव नोभयोर्मरणं क्वचित् ॥ २८ ॥
विदित्वेति [5]कुरुष्वात्मन् युगपच्चानयोर्वधम् ।
[6]शुश्राव ब्रह्मणो वाक्यं तत्याजास्त्रं महाबली ॥ २९ ॥
[7]तयोः प्रहरतोः स्वैरं कल्किर्दानवयोः क्रुधा ।
मुष्टिभ्यां वज्रकल्पाभ्यां बभञ्ज शिरसी तयोः ॥ ३० ॥
तौ तत्र [8]भग्नमस्तिष्कौ भग्नशृङ्गाविवगाविव ।
पेततुर्दिवि देवानां [9]भयदौ भुवि बाधकौ ॥ ३१ ॥
तद् दृष्ट्वा महदाश्चर्यं गन्धर्वाप्सरसां गणाः ।
ननृतुर्जगुस्तुष्टुवु[10]र्मुनयः सिद्धचारणाः ॥ ३२ ॥
देवाश्च कुसुमासारै[11]र्ववर्षुर्हर्षमानसाः ।
दिवि दुन्दुभयो नेदुः प्रसन्नाश्चाभवन् दिशः ॥ ३३ ॥

---

१. क ग घ
२. घ पुरतः कल्किमालोक्य बभाषाते स्फुटाक्षरौ
३. ग तत्रागत्य, घ तमभ्येत्य
४. क × कराघाता······वधः
५. क कुरुष्वात्मन् स्वेषु स्वेष्वनयोर्वधम्
६. घ इति ब्रह्मवचः श्रुत्वा त्यक्तशस्त्रास्त्रवाहनः
७. क + तयोराक्षेपवचनैः कल्किर्योमिधुपाद्रवत् ।
तौ बाहुयुद्धबलिनौ रुषा त्यक्तगदौ मृधा ॥
युयुधातेऽतिबलिना कल्किना परमाद्भुतम् ।
८. ग भिन्नमस्तकौ
९. क. लोकानां भयदौ भुवि ।
१०. घ + च
११. क ववृषुर्हृष्टमानसाः



तयोर्वधप्रमुदितः कविर्दशसहस्रकान् ।
[1]साश्वान् महारथान् साक्षाददहद् दिव्यसायकैः ॥ ३४ ॥
[2]प्राज्ञः शतसहस्राणां योधानां [3]रणमण्डले ।
[4]क्षयं निन्ये सुमन्त्रस्तु रथिनां पञ्चविंशतिः ॥ ३५ ॥
एवमन्ये गार्ग्यभर्ग्यविशालाद्या महारथान् ।
निजघ्नुः समरे क्रुद्धा निषादान् [5]पारदांस्तथा ॥ ३६ ॥
एवं विजित्य तान् सर्वान् कल्किर्भूपगणैः सह ।
[6]शय्याकर्णैश्च भल्लाटनगरं जेतुमा[7]ययौ ॥ ३७ ॥
नानावाद्यैर्लोकसङ्घैर्वरास्त्रै-
र्नानावस्त्रैर्भूषणैर्भूषिताङ्गैः ।
नानावाहैश्चामरैर्वीज्यमानै-
र्यातो योद्धुं कल्किरत्युग्रसेनः ॥ ३८ ॥

[10]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
कोकादीनां वधो [11]नाम एकविंशोऽध्यायः ॥

---

१. क सङ्घान्
२. ग विज्ञः
३. घ रणमूर्धनि
४. ग निनाय यमसदनम्
५. घ म्लेच्छबर्बरान्
६. क शय्याकर्णः सहालापाद्
७. ग आगतः
८. ग मुदितैर्लोकसङ्घै
९. क भूषिताङ्गैश्च योधैः
१०. क × इति श्री
११. ग × नाम
१२. ग + समाप्तः

# द्वाविंशोऽध्यायः

## सूत उवाच

सेनागणैः परिवृतः कल्किर्नारायणः [1]स्वयम् ।
भल्लाटनगरं प्रायात् [2]खड्गधृक् ससिवाहनः ॥ १ ॥
स भल्लाटेश्वरो योगी ज्ञात्वा विष्णुं [3]जगत्प्रभुम् ।
[4]निजसेनागणान् गृह्य योद्धुकामो [5]हरिं ययौ ॥ २ ॥
[6]हर्षोत्फुल्लः स श्रीमान् दीर्घाङ्गः कृष्णभावनः ।
शशिध्वजो महातेजा गजायुतबलः सुधीः ॥ ३ ॥
तस्य पत्नी महादेवी विष्णुव्रतपरायणा ।
[7]पतिव्रता पतिं प्राह [8]श्रद्धागद्गदभाषणम् ॥ ४ ॥
नाथ कान्तं जगन्नाथं सर्वान्तिर्यामिनं प्रभुम् ।
[9]कल्किं नारायणं साक्षात् कथं त्वं प्रहरिष्यसि ॥ ५ ॥

## [10]शशिध्वज उवाच

सुशान्ते परमो धर्मः प्रजापतिविनिर्मितः ।
युद्धे प्रहारः सर्वत्र गुरौ शिष्ये [11]हरेरिव ॥ ६ ॥
जीवतो राजभोगः स्यान् मृतः स्वर्गे प्रमोदते ।
युद्धे जयो वा मृत्युर्वा क्षत्रियाणां मनोरमः ॥ ७ ॥

---

१. घ प्रभुः
२. क खड्गचर्मसवाहनः
३. घ जगत्पतिम्
४. ग घ निजसेनागणैः पूर्णो
५. क समागतः
६. घ स हर्षोत्पुलकः
७. घ सुशान्ता स्वामिनं
८. ग घ कल्किना योद्धुमुद्यतम्
९. क भगवन्तं कथं त्वं च साक्षात्
१०. ग राजा
११. क हराविह



## सुशान्तोवाच

[1]देवत्वं भूपतित्वं वा विषयाविष्टकामिनाम् ।
[2]उन्मदानां भवेदेव न हरेः [3]पादसेविनाम् ॥ ८ ॥
त्वं सेवकः स [4]च प्रभुस्त्वं निष्कामः स चाप्रदः ।
युवयोर्युद्धमिलनं कथं मोहाद् भविष्यति ॥ ९ ॥

## [5]शशिध्वज उवाच

द्वन्द्वातीते यदि द्वन्द्वमीश्वरे सेवके तथा ।
देहावेशाल्लीलयैव सा [6]सेवा स्यात्तथा मम ॥ १० ॥
देहावेशादीश्वरस्य कामाद्या दैहिका गुणाः ।
[7]मायांशा यदि जायन्ते [8]विषयाश्च न किं तथा ॥ ११ ॥
[9]ब्रह्मतो ब्रह्मतेशस्य शरीरित्वे शरीरिता ।
सेवकस्याभेददृशास्त्वेवं जन्मलयोदयाः ॥ १२ ॥
सेव्यसेवकता विष्णोर्माया सेवेति कीर्त्तिता ।
द्वैताद्वैतस्य चेष्टैषा त्रिवर्गजनिका सताम् ॥ १३ ॥
अतोऽहं [10]प्रभुणा [11]योद्धुं यामि कान्ते [12]स्वसेनया ।
[13]त्वं तं पूजय कान्तेऽद्य कमलापतिमीश्वरम् ॥ १४ ॥

## सुशान्तोवाच

कृतार्थाऽहं त्वया [14]विष्णुसेवासंमिलितात्मना ।
[15]राजन्नत्र परत्रापि वैष्णवी प्रथिता [16]गतिः ॥ १५ ॥

---

१. ग सुखावहः
२. क उन्मादाय, ग उन्मत्तानां
३. क पादसेवनम्
४. चापीशस्त्वं
५. ग राजा
६. ग सेवक तथा मम
७. घ मायाङ्गा
८. सेवकानाम्
९. क ब्रह्मत्वे
१०. घ कल्किना
११. सार्द्धं योद्धुं यामि
१२. क तु सेवया, ग ×
१३. क तं त्वं
१४. क सेवासम्बलतात्मना
१५. घ स्वामिन्निह
१६. ग प्रिया

[1]पत्न्या मनोहरैः वाक्यैः प्रणतायाः शशिध्वजः ।
आत्मानं वैष्णवं मेने साश्रुनेत्रो हरिं स्मरन् ॥ १६ ॥
तामालिङ्ग्य प्रमुदितः [2]शूरैर्बहुभिरावृतः ।
वदन् नाम स्मरन् रूपं [3]वैष्णवैर्योद्धुमाययौ ॥ १७ ॥
गत्वा तु कल्किसेनायां विद्राव्य महतीं चमूम् ।
शय्याकर्णगणैर्वीरैः सन्नद्धैरुद्यतायुधैः ॥ १८ ॥
शशिध्वजसुतः श्रीमान् सूर्यकेतुर्महाबलः ।
मरुभूपेन युयुधे वैष्णवो धन्विनां वरः ॥ १९ ॥
तस्यानुजो बृहत्केतुः कान्ते [4]महाधनुर्धरः ।
देवापिना [5]च युयुधे [6]भीषणैरायुधैः सह ॥ २० ॥
विशाखयूप[7]भूपालः शशिध्वजनृपेण च ।
युयुधे विविधैः शस्त्रै[8]र्गजैरश्वैः समन्वितः ॥ २१ ॥
रुधिराश्वो [9]वीरबाहुर्धनुर्धृत्वा प्रतापवान् ।
[10]रजस्यनेन युयुधे [11]भर्ग्यः शान्तेन धन्विना ॥ २२ ॥
शूलैः प्रासैर्गदाघातैर्बाणशक्त्यृष्टितोमरैः ।
भल्लैः खड्गैर्भुशुण्डीभिः कुन्तैः समभवद् रणः ॥ २३ ॥
पताकाभिर्ध्वजैश्चि[12]त्रै स्तोमरैश्छत्रचामरैः ।
प्रोद्धूतधूलिपटलैरन्धकारो महानभूत् ॥ २४ ॥
[13]गगनेऽनुधना देवाः के वा वासं न चक्रिरे ।
गन्धर्वैः साधुसन्दर्भै[14]र्गायकैरमृतायनैः ॥ २५ ॥

---

१. घ इति तस्या वल्गुवाग्भिः
२. क ग सुतैः
३. ग वैष्णवो
४. घ कोकिलनिस्वनः
५. ग स
६. घ गदायुद्धविशारदः
७. ग भूपस्तु
८. ग घ करिभिः परिवारितः
९. घ धनुर्धारी लघुहस्तः
१०. क राज्यमानेन
११. क विप्रः
१२. क ग चित्रैः
१३. क गगनेन घनं
१४. घ गायनै



[1]सर्वे समागता द्रष्टुं महाघोरं रणं भुवि ।
शङ्खदुन्दुभिसन्नादैरास्फोटैर्बृंहितैरपि ॥ २६ ॥
ह्रेषितैर्योधनोत्कृष्टैर्लोका मूका इवाभवन् ।
रथिनो रथिभिः साकं [2]पदातयः पदातिभिः ॥ २७ ॥
हया हयैरिभाश्चेभैः समरोऽमरदानवैः ।
यथाभवत् [3]स तुमुलो यमराष्ट्रविवर्द्धनः ॥ २८ ॥
[4]शशिध्वजचमूनाथाः कल्किसेनाधिपैः सह ।
निपेतुः सैनिका [5]भूमौ छिन्नबाह्वङ्घ्रिकन्धराः ॥ २९ ॥
धावन्तोऽतिब्रुवन्तश्च विकुर्वन्तोऽसृगु[6]क्षिताः ।
उपर्युपरि संच्छन्ना गजाश्वरथमर्दिताः ॥ ३० ॥
निपेतुः प्रधने वीराः कोटिकोटिसहस्रशः ।
भूते सानन्दसन्दोहाः स्रवन्तो रुधिरोदकम् ॥ ३१ ॥
उष्णीषहंसाः संच्छिन्नगजरोधो रथप्लवाः ।
करोरुमीनाभरण[7]मसिकाञ्चनवालुकाः ॥ ३२ ॥
[8]एवं प्रवृत्ताः संग्रामे नद्यः सद्योऽतिदारुणाः ।
सूर्यकेतुस्तु मरुणा [9]सह युद्धं महारवम् ॥ ३३ ॥
कालकल्पो दुराधर्षो मरुं बाणैरताडयत् ।
मरुस्तु [10]तत्र दशभिर्मार्गणैर[11]र्दयद् भृशम् ॥ ३४ ॥

---

१. घ द्रष्टुं समागताः सर्वे लोकाः समरमद्भुतम्
२. घ पदातयश्च
३. घ स तु घनो
४. ग घ शशिध्वजचमूनाथैः कल्किसेनाधिपाः सह
५. ग सर्वे
६. क अक्षितः
७. क मणिकाञ्चन बालुकाः
८. क + केशशैवलसम्बाधा परलोकप्रवाहिका
९. घ सहितो युयुधे बली
१०. क तं तु
११. ग रर्दयन्

मरुबाणाहतो [1]वीरः सूर्यकेतुरमर्षितः ।
जघान तुरगान् [2]कोपात् पादाघातेन तद् रथम् ॥ ३५ ॥
चूर्णयित्वाऽथ तेनापि तस्य वक्षस्यताडयत् ।
गदाघातेन तेनापि मरुमूर्च्छाम[3]वाप्तवान् ॥ ३६ ॥
सारथिस्तमपोवाह रथेनान्येन धर्मवित् ।
बृहत्केतुश्च देवापि बाणैः [4]प्राच्छादयद् बली ॥ ३७ ॥
[5]धनुर्विकृष्य तरसा नीहारेण यथा रविम् ।
[6]स तु बाणमयं वर्षं परिवार्य निजायुधैः ॥ ३८ ॥
[7]बृहत्केतुं दृढं जघ्ने कङ्कपत्रैः शिलाशितैः ।
[8]भिन्नं शूलं [9]तथा बाणैर्धनुरागृह्य शत्रुहा ॥ ३९ ॥
शितधारैः स्वर्णपुंखैर्गार्ध्रपत्रैरयोमुखैः ।
देवापिमाशुगैर्जघ्ने बृहत्केतुः ससैनिकम् ॥ ४० ॥
देवापिस्तद्धनुर्दिव्यं चिच्छेद [10]लीलया सह ।
छिन्नधन्वा बृहत्केतुः खड्गपाणिर्जिघांसया ॥ ४१ ॥
देवापेः सारथिं साश्वं जघ्ने [11]वीरो महारणे ।
स देवापिर्धनुस्त्यक्त्वा [12]तलेनाहत्य तं रिपुम् ।
भुजयोरन्तरानीय निष्पिपेष स [13]निर्दयः ॥ ४२ ॥

---

१. ग चासौ
२. घ कोपात् पदाघातेन
३. घ अवाप ह
४. क प्राच्छायन्
५. ग धनुस्ततान
६. क × स तु······निजायुधैः
७. क + देवापि बाणभिन्नाङ्गः पतितः सहसोत्थितः ।
वमद्रुधिररक्ताक्षस्तं शूलेनाहनत् क्रुधा ।
तं शूलं तिग्मबाणाभ्यां त्रिधा भिन्नमपातयत् ।
८. ग लूनम्
९. घ अथालोक्य धनुर्गृह्य पतत्रिभिः
१०. घ निशितैः शरैः
११. ग घ शूरो महामृधे
१२. घ करेण
१३. क ग निर्घृणः



तं द्व्यष्टवर्षं निष्क्रान्तं मूर्च्छितं शत्रुणार्दितम् ।
अनुजं वीक्ष्य देवापिर्मूर्ध्नि [1]सूर्यध्वजोऽवधीत् ॥ ४३ ॥
मुष्टिना [2]वज्रपातेन सोऽपतन् मूर्च्छितो भुवि ।
मूर्च्छितस्य [3]रिपुः [4]क्रोधात् सेना[5]गणमताडयत् ॥ ४४ ॥
[6]स शशिध्वजः सर्वजगन्निवासं
कल्किं पुरस्ताद[7]भिसूर्यवर्चसम् ।
श्यामं पिशङ्गाम्बरमम्बुजेक्षणं
बृहद्भुजं चारुकिरीटभूषिणम् ॥ ४५ ॥
नानामणिव्रातचिताङ्गशोभया
निरस्तलोकेक्षणहृत्तमोमयम् ।
विशाखयूपादिभिरावृतं प्रभुं
ददर्श धर्मेण कृतेन पूजितम् ॥ ४६ ॥

[8]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
शशिध्वजकल्किसैन्ययोर्युद्धं [9]नाम द्वाविंशोऽध्यायः[10]

---

१. ग देवध्वजो
२. ग वज्रकल्पेन
३. ग रिपोर्हस्तात्
४. क ग सानुजः सबलः क्रोधात्
५. क समादायानुजम्
६. घ × स
७. क दतिसूर्य
८. क × इति श्री
९. ग × नाम
१०. ग + समाप्तः

# त्रयोविंशोऽध्यायः

## सूत उवाच

हृदि ध्यानास्पदं रूपं कल्केर्दृष्ट्वा शशिध्वजः ।
पूर्णं खड्गधरं चारु[1]तुरगारूढमब्रवीत् ॥ १ ॥
धनुर्बाणधरं [2]रत्नविभूषणवराङ्गकम् ।
पापतापविनाशार्थमुद्यतं जगतां [3]परम् ॥ २ ॥
[4]तमुवाच जगन्नाथं हृष्टरोमा शशिध्वजः ।
एह्येहि पुण्डरीकाक्ष [5]प्रहारं कुरु मे हृदि ॥ ३ ॥
अथवात्मन् बाणभिया तमोऽन्धे [6]हृदि मे विश ।
निर्गुणस्य गुणज्ञत्वमद्वैतस्यास्त्रताडनम् ॥ ४ ॥
निष्कामस्य जयोद्योगसहायं यस्य सैनिकम् ।
लोकाः पश्यन्तु युद्धे मे द्वैरथे परमात्मनः ॥ ५ ॥
परबुद्धिर्यदि दृढं [7]प्रहर्त्ता विभवे त्वयि ।
शिवविष्णोर्भेदकृते लोकं यास्यामि संयुगे ॥ ६ ॥
[8]राज्ञो वचनमाकर्ण्य अक्रोधः [9]क्रुद्धवद् विभुः ।
बाणैरताडयत् संख्यं धृतायुधमरिन्दमम् ॥ ७ ॥
शशिध्वजस्तत्प्रहारमगणय्य वरायुधैः ।
[10]जघान बाणवर्षेण धाराभिरिव पर्वतम् ॥ ८ ॥

१. तुरङ्गारूढ
२. घ चारु
३. क पतिम्
४. घ प्राह तं परमात्मानं
५. ग वाणैस्ताड्य
६. क तत्र
७. क प्रहर्त्तरि भवे
१. इति राज्ञो वचः
९. ग क्रोधितो
१०. घ तं जघ्ने



तद्बाणवर्षभि[1]न्नान्तः कल्किः [2]क्रोधवशं गतः ।
दिव्यैः शस्त्रास्त्रसंघातैस्तयोर्युद्धमवर्तत ॥ ९ ॥
ब्रह्मास्त्रस्य च ब्रह्मास्त्रैर्वायव्यस्य च पार्वतैः ।
आग्नेयस्य च पार्जन्यैः पन्नगस्य च गारुडैः ॥ १० ॥
एवं नानाविधैरस्त्रैरन्योन्य[3]मभिजघ्नतुः ।
[4]सर्वे लोकाश्च संत्रस्ता युगान्तमिव मेनिरे ॥ ११ ॥
देवा बाणाग्नि[5]तापेन [6]अगमन् खगमाः किल ।
ततोऽतिवितथोद्योगौ वासुदेवशशिध्वजौ ॥ १२ ॥
निरस्त्रौ बाहुयुद्धेन युयुधाते परस्परम् ।
पदाघातैस्तलाघातैर्मुष्टि[7]प्रहरणैस्तथा ॥ १३ ॥
नियुद्धकुशलौ वीरौ [8]मुमुदाते परस्परम् ।
वराहोद्धृतशब्देन [9]तं [10]तलेनाहनद्धरिः ॥ १४ ॥
[11]स मूर्च्छितो नृपः कोपात् समुत्थाय च तत्क्षणात् ।
मुष्टिभ्यां वज्रकल्पाभ्यामवधीत् कल्किमोजसा ।
स कल्किस्तत्प्रहारेण पपात भुवि मूर्च्छितः ॥ १५ ॥
धर्मः कृतं च तं दृष्ट्वा मूर्च्छितं जगदीश्वरम् ।
[12]समागतौ तमानेतुं कक्षे तौ जगृहे नृपः ॥ १६ ॥
कल्किं वक्षस्युपादाय [13]लब्धार्तः प्रययौ गृहम् ।
[14]युद्धे नृपाणामन्येषां पुत्रौ दृष्ट्वा सुदुर्जयौ ॥ १७ ॥

१. ग भित्वाशु
२. घ परमकोपनः
३. ग अभिजग्मतुः
४. घ लोकाः सपाला
५. घ संत्रस्ता
६. क स्वसभाः अगमन्
७ क प्रहरणौ मिथः
८. ग युयुधाते
९. क तरलेना
१०. ग बलेन
११. क × स मूर्च्छितो······ओजसा
१२. ग समायातौ
१३. लब्धार्थः
१४. घ युद्धेन

कल्किं सुराधिपपतिं प्रधने विजित्य
धर्मं कृतं च निजकक्षयुगे निधाय ।
हर्षोल्लसद्धृदय उत्पुलकः प्रमाथी
गत्वा गृहं हरिगृहे ददृशे [1]सुशान्ताम् ॥ १८ ॥

दृष्ट्वा तस्याः सुललितमुखं वैष्णवीनां च मध्ये
गायन्तीनां हरिगुणकथास्तामथ प्राह राजा ।
देवादीनां विनयवचसा शम्भले लब्धजन्मा
विद्यालाभं परिणयविधिं [2]म्लेच्छपाषण्डनाशम् ॥ १९ ॥

कल्किः स्वयं हृदि समायमिहागतोऽस्ति
मूर्च्छाछलेन [3]तव सेवनमीक्षणार्थम् ।
धर्मं कृतं च मम कक्षयुगे सुशान्ते
कान्ते विलोकय समर्चय संविधेहि ॥ २० ॥

इति नृपवचसा विनोदपूर्णा
हरिकृतधर्मयुतं प्रणम्य नाथम् ।
सह निजसखिभिर्नतं रामा
हरिगुणकीर्तनवर्तना विलज्जा ॥ २१ ॥

इति [4]श्रीकल्किपुराणेऽनुभागवते भविष्ये
कृतधर्मकल्किनामानयनं नाम[5] त्रयोविंशोऽध्यायः[6] ।

१. ग प्रशान्ताम्
२. क म्लेच्छशङ्कानिरासम्
३. क तपसेवनमोक्षणार्थम्
४. क × इति श्री
५. ग × नाम
६. ग + समाप्तः

# चतुर्विंशोऽध्यायः

## सुशान्तोवाच

जय हरेऽमराधीशसेवितं तव पदाम्बुजं भूरिभूषणम् ।
कुरु ममाग्रतः साधुसत्कृतं त्यज [1]विशां पते मोहमात्मनः ॥ १ ॥
तव वपुर्जगद्रूपसम्पदा विरचितं सतां मानसे स्थितम् ।
रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ॥ २ ॥
तव [2]यशो जगच्छोकनाशनं मृदुकथामृतप्रीतिदायकम् ।
स्मितसुधोक्षितं चन्द्रवन्मुखं तव करोत्वलं लोकमङ्गलम् ॥ ३ ॥
मम [3]धवस्त्वयं सर्वदुर्जयो यदि तवाप्रियं कर्मणाचरेत् ।
जहि तदात्मनः [4]शत्रुमागतं कुरु कृपां न [5]चेदीदृगीश्वरः ॥ ४ ॥
महदहंयुतं पञ्चमात्रया प्रकृतिजायया निर्मितं वपुः ।
तव निरीक्षणाल्लीलया जगत्स्थितिलयोदयं ब्रह्मकल्पितम् ॥५॥
भुवि यन् [6]मरुद्वारितेजसां राशिभिः [7]शरीरेन्द्रियाश्रितैः ।
त्रिगुणया स्वया मायया विभो कुरु कृपां [8]भवत्सेवनार्थिनाम् ॥६॥
तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये ।
भवभयक्षयं तापतापिता मुहुरहो जनाः [9]संसरन्ति नो ॥७॥
तव [10]जन्म सतां मानवर्द्धनं निजकुलक्षयं देवपालकम् ।
कृतयुगार्पकं धर्मपूरकं कलिकुलान्तकं शं तनोतु मे ॥८॥

१. घ महामते
२. ग मुखं
३. ग घ पति
४. ग घ शत्रुमुद्यतं
५. क चेदीदृशीश्वरः
६. ग वारिमरुत्
७. क सुरैरिन्द्रयाभितैः
८. क भवत् सर्वदार्थिनाम्
९. ग सञ्चरन्ति
१०. क जनुः

मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः ।
मणिवरासनं सत्कृतिं विना तव [1]पदाब्जयोः शोभयन्ति [2]किम् ॥९॥
तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् ।
[3]यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विह ॥१०॥
[4]इति तस्याः सुशान्ताया गीतेन [5]परितोषितः ।
उत्तस्थौ [6]चाहवक्षेत्रे कल्किर्युद्धस्थवीरवत् ॥ ११ ॥
[7]सुशान्तां पुरतो दृष्ट्वा कृतं वामे तु दक्षिणे ।
धर्मं शशिध्वजं [8]पश्चात् प्राहेति व्रीडिताननः ॥ १२ ॥
[9]कासि पद्मपलाशाक्षि [10]मम सेवार्थमुद्यता ।
[11]कान्ते शशिध्वजः शूरो मम पश्चादुपस्थितः ॥ १३ ॥
हे धर्म हे कृतयुग कथमत्रागता वयम् ।
रणाङ्गणं विहायास्याः [12]शत्रोरन्तःपुरे वद ॥ १४ ॥
शत्रुपत्न्यः कथं साधु सेवन्ते मार्मार मुदा ।
शशिध्वजः [13]स्वभिमानी मूर्च्छितं हन्ति नो कथम् ॥ १५ ॥

## सुशान्तोवाच

पाताले [14]दिवि वा क्षितौ नरनागसुरासुराः ।
नारायणस्य [15]ते कल्के के वा सेवां न कुर्वते ॥ १६ ॥

---

१. ग पदद्वयोः
२. ग न
३. क ग × यदि .... इह
४. घ + हयचरभयहरकरहरशरणखरतरवरदशबलमदन ।
जयहतपरभरभववरनशनशशधरशतसमरसभरवदन ।
५. परिबोधितः
६. घ रणशय्यायाः
७. ग स्थितां सुशान्तां पुरतः
८. ग पृष्ठात्
९. घ का त्वं
१०. क मत्सेवापरमोद्यता
११. क कस्ते
१२. ग शशिध्वजस्यान्तःपुरे
१३. घ शूरमानी
१४. घ भूमौ वा
१५. ग सेवां च के वा कर्तुं नेच्छन्ति



यत्सेवकानां जगतां मित्राणां दर्शनादपि ।
निवर्तन्ते शत्रुभावस्तस्य साक्षात् कुतो रिपुः ॥ १७ ॥
त्वया सार्द्धं मम पतिः [1]मैत्रीभावं परित्यजेत् ।
यदि योग्यस्तदानेतुं किं समर्थो निजालयम् ॥ १८ ॥
तव दासो मम स्वामी अहं [2]दास्यखिलाश्रया ।
आवयोः संप्रसादाय आगतोऽसि [3]महाभुज ॥ १९ ॥

## धर्म उवाच

अहं तवैतयोर्भक्त्या नामरूपानुकीर्तनात् ।
[4]परितुष्टः कृतार्थोऽस्मि [5]आगतोऽत्र कलिक्षय ॥ २० ॥

## कृतयुग उवाच

अधुनाहं कृतयुगं तव दासस्य दर्शनात् ।
त्वमीश्वरो जगत्पूज्य [6]सेवकस्यास्य तेजसा ॥ २१ ॥

## शशिध्वज उवाच

[7]दण्डयाहं दण्डय [8]स्वामिन् योद्धृत्वादुद्यतायुधम् ।
येन [9]कामादिरागेण त्वय्यात्मन्यपि वैरिता ॥ २२ ॥
इति कल्किर्वचस्तेषां [10]निशम्य [11]हसिताननः ।
[12]राजन् त्वं जितवानसि मामेत्याह हसंस्तथा ॥ २३ ॥
[13]ततः शशिध्वजो राजा युद्धादाहूय पुत्रकान् ।
सुशान्ताया [14]मतिं [15]बुद्ध्वा रमां प्रादात् स कल्कये ॥ २४ ॥

---

१. ग घ शत्रुभावेन संयुगे
२. घ दासी निजा तव
३. क ममालये
४. घ कृतार्थोऽस्मि
५. घ कृतार्थोऽस्मि
६. क ग सेवकस्यापि
७. घ दण्ड्य
८. घ विभो
९. ग कामानुरागेण
१०. ग श्रुत्वा प्राह
११. ग स्मिताननः
१२. घ त्वया जितोऽस्मीति नृपं पुनः पुनरुवाच ह
१३. क ततश्चासौ शशिध्वजो
१४. क सुताम्
१५. ग बुद्धया

[1]तदैत्य मरुदेवापी शशिध्वजसमाहुतौ ।
विशाखयूपभूपश्च रुधिराश्वश्च संयुगात् ॥ २५ ॥
शय्याकर्णनृपेणापि भल्लाटं पुरमाययुः ।
सेनागणैरसंख्यातैः सा पुरी [2]पीडिताभवत् ॥ २६ ॥
गजाश्वरथसंबाधैः पत्तिच्छत्ररथध्वजैः ।
कल्किनापि रमायाश्च विवाहोत्सवसम्पदाम् ॥ २७ ॥
द्रष्टुं समीयुस्त्वरिता हर्षात् सबलवाहनाः ।
शङ्खभेरीमृदङ्गानां वादित्राणां च निस्वनैः ॥ २८ ॥
नृत्यगीतविधानैश्च पुरस्कृतमङ्गलैः ।
विवाहो रमया कल्केरभूदति[3]मनोरमः ॥ २९ ॥
नृपा नानाविधै[4]र्भोज्यैः [5]पूजिता विविशुः सभाम् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चावरजातयः ॥ ३० ॥
[6]विचित्रभोगाभरणाः कल्किं द्रष्टुमु[7]पाविशन् ।
[8]सभायां शुशुभे चासौ कल्किः कमललोचनः ॥ ३१ ॥
नक्षत्रगणमध्यस्थः पूर्णः शशधरो यथा ।
रेजे राजगणाधीशो लोकान् सर्वान् विमोहयन् ॥ ३२ ॥
[9]रमापतिं कल्किमवेक्ष्य भूपः सभागतं [10]पद्मदलायतेक्षणम् ।
जामातरं भक्तियुतेन कर्मणा विबुध्य मध्ये निषसाद तत्र [11]च ॥३३॥

[12]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[13]कल्किना रमाविवाहो [14]नाम चतुर्विंशोऽध्यायः[15] ।

१. क स दैत्य
२. ग विमर्दिता चाभूत्, घ मर्दिताभवत्
३. घ सुखावहः
४. ग भोग्यैः
५. क सभां जग्मुराराधिताः
६. क विचित्रवेशाभरणाः
७. ग उपस्थिताः
८. घ तस्यां सभायां शुशुभे
९. क जगत्पतिं
१०. क + यत्र
११. ग घ ह
१२. क × इति श्री
१३. क कल्किरमयोः
१४. ग × नाम
१५. ग + समाप्तः

# पञ्चविंशोऽध्यायः

## सूत उवाच

तत्राहुस्ते सभामध्ये वैष्णवं तं शशिध्वजम् ।
[1]सुशान्तां च कृतेनापि धर्मेण विधिवद्युताम् ॥ १ ॥

## राजान ऊचुः

युवां [2]नारायणास्यास्य कल्केः श्वशुरतां गतौ ।
वयं नृपा इमे लोका ऋषयो [3]ब्राह्मणाश्च ये ॥ २ ॥
प्रेक्ष्य [4]भक्तिवितानं वां हरौ विस्मितमानसाः ।
पृच्छामस्त्वामियं भक्तिः [5]कुतो लब्धा [6]परात्मनः ॥ ३ ॥
[7]कस्य वा शिक्षिता राजन् किं वा नैसर्गिकी तव ।
[8]श्रोतुमिच्छामोऽथ सर्वां त्रिजगज्जनपावनीम् ।
कथां भागवतीं त्वत्तः [9]संसाराश्रमनाशिनीम् ॥ ४ ॥

## शशिध्वज उवाच

श्रीपुंसोरावयोस्तत्तच्छृणुतामोघविक्रमाः ।
वृत्तं यज्जन्मक[10]र्मादि स्मृतिं [11]तद्भक्तिलक्षणम् ॥ ५ ॥
पुरा युगसहस्रान्ते गृध्रोऽहं [12]पूतिमांसभुक् ।
[13]गृध्री चासीत् प्रियारण्ये कृतनीडौ वनस्पतौ ॥ ६ ॥

१. घ + मुनिभिः कथिताशेषभक्तिव्यासक्तविग्रहम्
२. ग वासुदेवस्यास्य
३. क ब्राह्मणाश्रमे
४. क भक्त्यर्चितानां
५. ग घ क्व
६. क परागतिः, घ परमात्मनः
७. ग युवयोः को गुरुः
८. घ श्रोतुमिच्छामहे राजन्
९. क. संसारश्रम
१०. क कर्माणि
११. ग सभक्ति
१२. ग मत्स्यमांसभुक्
१३. क घ गृध्रीयम्

[1]चरावस्तत्र सर्वत्र वनोपवनसंकुले ।
[2]मृतानां पूतिमांसौघैः प्राणिनां वृत्तिकल्पकौ ॥ ७ ॥
एकदा लुब्धकः क्रूरो [3]लुलोभ पिशिताशिनौ ।
आवां वीक्ष्य गृहे पुष्टं गृध्रं [4]तत्र समानयत् ॥ ८ ॥
[5]तं वीक्ष्य जातविश्रम्भौ क्षुधया [6]ह्यतिकातरौ ।
[7]स्त्रीपुंसौ पतितौ तत्र मांसलोभितचेतसौ ॥ ९ ॥
बद्धावावां वीक्ष्य तदा [8]हर्षमवाप लुब्धकः ।
जग्राह [9]कण्ठमादाय चञ्च्वाग्राघातपीडितः ॥ १० ॥
आवां गृहीत्वा गण्डक्याः शिलायां सलिलान्तिके ।
[10]मस्तकं चूर्णयामास लुब्धकः पिशिताशनः ॥ ११ ॥
चक्राङ्कित[11]शिलागङ्गामरणादपि तत्क्षणात् ।
ज्योतिर्मयविमानेन सद्यो भूत्वा चतुर्भुजौ ॥ १२ ॥
प्राप्तौ वैकुण्ठनिलयं सर्वलोक[12]सुखावहम् ।
तत्र स्थित्वा युगशतं ब्रह्मणो लोकमागतौ ॥ १३ ॥
[13]ब्रह्मलोके पञ्चशतं युगानामुपभुज्य वै ।
देवलोके [14]स्थितौ चास्व पुनर्युगचतुःशतम् ॥ १४ ॥
ततो भुवि [15]नृपास्तावद् बद्धसूनुरहं स्मरन् ।
हरेरनुग्रहं लोके शालग्राम[16]शिलाश्रमम् ॥ १५ ॥

---

१. क घ चचार कामं सर्वत्र
२. क वृन्तानां पूतिकुसुमैः
३. लोभाच्च
४. ग तत्र नियोजयत्, घ तत्राप्ययोजयत्
५. ग गृध्रं तं समालोक्य
६. घ परिपीडितौ
७. ग स्त्रीपुंसावगतौ
८. घ हर्षादागत्य
९. घ कण्ठे तरसा
१०. घ मस्तिकं
११. क शिलामङ्गात्
१२. घ नमस्कृतम्
१३. ग तस्मिन् लोके
१४. घ कालवशाद्
१५. क नृपास्ताराध्य
१६. ग शिलाश्रयम्



जातिस्मरत्वं गण्डक्याः किं तस्याः [1]कथयाम्यहम् ।
यज्जलस्पर्शमात्रेण माहात्म्यं महदद्भुतम् १६ ॥
चक्राङ्कितशिलास्पर्शमरणस्येदृशं फलम् ।
न जाने वासुदेवस्य सेवया किं भविष्यति ॥ १७ ॥
इत्यावां हरिपूजासु हर्षविह्वल[2]चेतसौ ।
नृत्यन्तौ [3]गायन्तौ चैव विलुठन्तौ [4]शिलातले ॥ १८ ॥
कल्केर्नारायणांशस्य अवतारः [5]कलिक्षयः ।
पुरा विदितवीर्यस्य पृष्टो ब्रह्ममुखाच्छ्रुतः ॥ १९ ॥
इति राजसभायां सः श्रावयित्वा निजाः कथाः ।
ददौ गजानामयुतमश्वानां लक्षमादरात् ॥ २० ॥
श्वानां षट्सहस्रं तु ददौ पूर्णस्य भक्तितः ।
दासीनां युवतीनां च [6]रमानाथाय षट्शतम् ॥ २१ ॥
रत्नानि च महार्घाणि [7]ददौ राजा शशिध्वजः ।
मेने कृतार्थमात्मानं स्वजनैर्बान्धवैः [8]स्त्रिया ॥ २२ ॥
सभासद इति श्रुत्वा [9]पूर्वजन्मोदिताः कथाः ।
[10]विस्मयाहतचेतसः [11]पूर्णं तं मेनिरे नृपम् ॥ २३ ॥
कल्किं स्तुवन्तो ध्यायन्तः प्रशंसन्तो[12]ऽखिला जनाः ।
[13]राजानं पुनरपृच्छन् लक्षणं भक्तिभक्तयोः ॥ २४ ॥

---

१. ग वर्णयामि
२. क चेतनौ
३. ननु गायन्तौ, घ अवगायन्तौ
४. घ स्थिताविह
५. स्वयं प्रभुः
६. ग तन्नृपाय
७. घ दत्त्वा
८. घ सह
९. क पूर्वजन्मोचिताः
१०. घ विस्मयाविष्टमनसः
११. ग सम्पूर्णं
१२. घ जगज्जनाः
१३. घ पुनस्तमाहू राजानं

[1]नृपा ऊचुः

[2]भक्तिः कास्ति भगवतः को वा भक्तो विधानवित् ।
किं करोति किमश्नाति क्व वसति वक्ति च किम् ॥ २५ ॥

एतान् वर्णय राजेन्द्र सर्वं त्वं वेत्सि [3]सादरात् ।
जातिस्मरत्वात् कृष्णस्य [4]जगतः पावनेच्छया ॥ २६ ॥

[5]इत्थं वचनमाकर्ण्य सन्तुष्टात्मा नृपस्तथा ।
साधुवादैः समामन्त्र्य तानाह ब्रह्मणोदितम् ॥ २७ ॥

[6]शशिध्वज उवाच

पुरा ब्रह्मसभामध्ये महर्षिगणसंकुले ।
सनको नारदं प्राह भवद्भिर्यास्त्विहोदिताः ॥ २८ ॥

[7]तेषामनुग्रहेणाहं [8]तत्र स्थित्वा श्रुताः कथाः ।
यास्ता [9]निवेदयाम्यद्य शृणुध्वं [10]पापनाशनाः ॥ २९ ॥

सनक उवाच

का भक्तिः संसृतिहरा हरौ लोकनमस्कृता ।
तामादौ वर्णय मुने [11]नारदावहिता वयम् ॥ ३० ॥

नारद उवाच

मनःषष्ठानीन्द्रियाणि संयम्य [12]विजितेन्द्रियः ।
गुरावपि [13]न्यसेद् देहं लोकतन्त्रविचक्षणः ॥ ३१ ॥

१. ग ×
२. घ भक्तिकाम्यद् भगवतः
३. ग विस्तरम्
४. घ जगतां
५. घ इति तेषां वचः श्रुत्वा प्रफुल्लवदनो नृपः
६. ग राजा
७. ग तेषामेवानुग्रहेण
८. घ उषित्वा
९. घ संकथयामीह
१०. ग पापनाशकाः
११. ग नारदावहिताय च
१२. घ परया धिया
१३. क न सन्देहम्



गुरौ प्रसन्ने भगवान् प्रसीदति [1]जगत्प्रभुः ।
प्रणवाग्निप्रिया[2]मध्ये मवर्णं तन्निदेशतः ॥ ३२ ॥

स्मरेदनन्यया [3]धिया देशिकः सुसमाहितः ।
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ३३ ॥

पूजयित्वा वासुदेवपाद[4]पद्मं समाहितः ।
सर्वाङ्गसुन्दरं रम्यं स्मरेद्धृतपद्ममध्यगम् ॥ ३४ ॥

एवं ध्यात्वा [5]वाक्यमनोबुद्धीन्द्रियगणैः सह ।
आत्मानमर्पयेद् विद्वान् [6]हरावेकान्तभाववित् ॥ ३५ ॥

अङ्गानि देवास्त्वेषां तु नामानि [7]विदितानि च ।
विष्णोः कल्केरनन्तस्य तान्येवान्यन्न विद्यते ॥ ३६ ॥

सेव्यः कृष्णः सेवकोऽहमन्ये तस्यात्ममूर्तयः ।
[8]कृष्णमतिर्मनस्यास्तां भक्तकल्याणकारिणी ॥ ३७ ॥

भक्तस्यापि हरौ द्वैतं सेव्यसेवक[9]वत्तदा ।
नान्यद् विना तमित्येव [10]क्व च किञ्चन विद्यते ॥ ३८ ॥

[11]नृत्यत्यद्भुतवद् रौति हसति प्रैति तन्मनाः ।
विलुण्ठत्यात्मविस्मृत्या न वेत्ति कियदन्तरम् ॥ ३९ ॥

१. घ हरिः स्वयम्
२. क मध्यमपूर्णम्
३. घ बुद्ध्या
४. ग पादचिह्नं हृदा वहन्
५. क मनोबुद्धीन्द्रियमाणात्राङ्गुलिना सह
६. क हरावेकान्तभावतः
७. घ विदितान्युत
८. घ अविद्योपाधयोऽज्ञानं बदन्ति प्रभवादयः
९. क वत्तया
१०. क ग तदानन्दसुखोदयः
११. घ + भक्तः स्मरति तं विष्णुं तन्नामानि च गायति ।
तत्कर्माणि करोत्येव तदानन्दसुखोदयः ।

एवंविधा भगवतो भक्तिरव्यभिचारिणी ।
पुनाति सहसा लोकान् [1]देवदानवमानुषान् ॥ ४० ॥
भक्तिः [2]सा प्रकृतिर्नित्या ब्रह्मसम्पत्प्रकाशिता ।
शिवविष्णुब्रह्मरूपा [3]वेदाद्यानां [4]वरापि वा ॥ ४१ ॥
भक्ताः [5]सत्त्वगुणाध्यासाद् रजसेन्द्रियलालसाः ।
तमसा घोरसंकल्पा भजन्ति द्वैतदृग्जनाः ॥ ४२ ॥
सत्त्वान्निर्गुणतामेति रजसा विषयस्पृहा ।
तमसा नरकं यान्ति संसाराद्वैतधर्मिणि ॥ ४३ ॥
उच्छिष्टमवशिष्टं वा पथ्यं पूतममीप्सितम् ।
भक्तानां भोजनं विष्णोर्नैवेद्यं सात्विकं [6]मतम् ॥ ४४ ॥
इन्द्रियप्रीति[7]कारकं शुक्रशोणितवर्द्धनम् ।
भोजनं राजसं शुद्धमायुरारोग्यवर्द्धनम् ॥ ४५ ॥
अतः परं तामसानां कट्वम्लोष्णविदाहिकम् ।
पूति पर्युषितं ज्ञेयं भोजनं [8]तामसप्रियम् ॥ ४६ ॥
सात्त्विकानां [9]वने वासो [10]ग्रामे वासस्तु राजसः ।
तामसं द्यूतमद्यादि[11]सदनं परिकीर्त्तितम् ॥ ४७ ॥
[12]यदि हरिर्न ददाति सेवकस्तु न [13]याचते ।
तथापि परमा प्रीतिस्तयोः किमिति शाश्वती ॥ ४८ ॥

१. घ सदेवासुर
२. ग या
३. ग वेदादीनां
४. क वरोऽपि
५. क सत्त्वगुणो धीमान् रजसेन्द्रियलालसः
६. ग विदुः
७. घ जननं
८. क हिंसयान्वितम्
९. ग वनवासो
१०. ग ग्रामवासो हि
११. ग सेवनं
१२. घ न दाता स हरिः किञ्चिन्
१३. घ याचकः



इत्येतद् भगवत ईश्वरस्य विष्णो-
र्गुणकथनं सनको विबुध्य भक्त्या ।
सविनयवचनैः सुरर्षिवर्यं
प्रणम्य चेन्द्रपुरं जगाम शुद्धः ॥ ४९ ॥

[1]इति श्रीकल्किपुराणेऽनुभागवते[2] भविष्ये
[3]नृपगणशशिध्वजसंवादो नाम[4] पञ्चविंशोऽध्यायः[5] ।

१. क × इति श्री
२. घ + संवादे
३. घ + जातिस्मरत्वं
४. ग × नाम
५. ग + समाप्तः

# षड्विंशोऽध्यायः

**शशिध्वज उवाच**

[1]तदेतत् कथितं [2]सर्वं कथनीयोरुकर्मणः ।
कथा भक्तस्य भक्तेश्च [3]किमन्यत् कथयाम्यहम् ॥ १ ॥

**भूपा ऊचुः**

त्वं राजन् वैष्णवश्रेष्ठः सर्वसत्त्वहिते रतः ।
[4]तवावेशः कथं [5]युद्धक्षेत्रे हिंसादिकर्मणि ॥ २ ॥
प्रायशः साधवो लोके जीवानां हितकारिणः ।
प्राणबुद्धिधनैर्वाग्भिः सर्वेषां [6]विषयात्मनाम् ॥ ३ ॥

**[7]शशिध्वज उवाच**

[8]द्वैतप्रकाशिनी या तु प्रकृतिः कामरूपिणी ।
या सूते त्रिजगत्कृतं वेदांश्च त्रिगुणात्मिका ॥ ४ ॥
ते वेदास्त्रिजगद्धर्मशासना धर्मनाशनाः ।
भक्तिप्रवर्त्तका लोके कामिनां विषयैषिणाम् ॥ ५ ॥
वात्स्यायनादिमुनयो मनवो [9]धर्मशासकाः ।
वहन्ति बलिमीशस्य वेदवाक्यानुशासिताः ॥ ६ ॥
वयं तदनुगाः [10]सर्वे स्वधर्मपरिपालकाः ।
जिघांसन्तं जिघांसामो वेदार्थकृत[11]निश्चयाः ॥ ७ ॥

१. घ एतद् वः
२. घ भूपाः
३. ग पुनः किं
४. क तदादेशः
५. ग युद्धरङ्गे
६. विषयैषिणाम्
७. ग राजा
८. क ✕ द्वैतप्रकाशिनी··· विषयैषिणाम् (५)
९. घ वेदपारगाः
१०. घ कर्मधर्मनिष्ठा रणप्रियाः
११. क ग निर्णयाः



[1]अवध्यस्य वधे यावांस्तावान् वध्यस्य रक्षणे ।
इत्याह भगवान् व्यासः सर्व[2]वेदार्थतत्परः ॥ ८ ॥
[3]प्रायश्चित्तं न तत्रास्ति तत्राधर्मः प्रवर्त्तते ।
अतोऽत्र वाहिनीं हत्वा भवतां युधि दुर्जयाम् ॥ ९ ॥
धर्मं कृतं च [4]कल्किं तु समानीयागता वयम् ।
एषां भक्तिर्मम मता तवाभिप्रेत[5]मीरय ॥ १० ॥
[6]तदेवं वोऽनुवक्ष्यामि वेदवाक्यानुसारतः ।
यदि विष्णुः स सर्वत्र तदा कं हन्ति को हतः ॥ ११ ॥
हन्ता विष्णुर्हतो विष्णुर्वधः कस्यास्ति[7] तत्र चेत् ।
युद्धयज्ञादिषु वधे न वधो वेदशासनात् ॥ १२ ॥
[8]तथा गायन्ति मुनयो मनवश्च चतुर्दश ।
इत्थं युद्धैश्च यज्ञैश्च भजामो [9]विष्णुमीश्वरम् ॥ १३ ॥
[10]अतो भागवतीं मायामाश्रित्य विधिना यजन् ।
[11]प्रभुदासभावेनैव सुखं लभते पुष्कलम् ॥ १४ ॥

**भूपा ऊचुः**

[12]निमेर्भूपस्य भूपाल गुरोः शापान् मृतस्य च ।
[13]शरीरे तादृशं नूनं विरागः कथमुच्यताम् ॥ १५ ॥

१. घ अवन्ध्यस्य
२. क वेदार्थपारगः
३. क + प्रायश्चित्तविधिर्यत्र ततो धर्मः प्रवर्त्तते ।
प्रायश्चित्तं यत्र नास्ति तत्र धर्मवधः स्मृतः ।
४. ग कल्कि च
५. क मीरया
६. घ अहं तदनुवक्ष्यामि
७. ग सम्भवः
८. घ इति
९. क हरिमीश्वरम्
१०. क + पशुभिः शत्रुभिर्लोके वसुभिः स्वगणैः सह ।
वेदातीता निर्विषया येऽन्ये त्यक्तमनोहराः ;
विधिद्रुहो लोकहीनाः काष्ठकुड्योपमाः कथम् ।
११. घ सेव्यसेवकभावेन सुखी भवति नान्यथा
१२. क निमिभूपश्च भूलश्च
१३. घ तादृशो भोगायतने

शिष्यशापाद् वसिष्ठस्य देहावाप्तिर्मृतस्य च ।
श्रूयते किल मुक्तानां जन्म भक्त[1]विमुक्तये ॥ १६ ॥
[2]अतो भागवती माया [3]दुर्बोध्याविजितात्मनाम् ।
[4]विमोहयति संसारे नानात्वादिन्द्रजालवत् ॥ १७ ॥
[5]ज्ञानगर्भं वचः श्रुत्वा राजा चासौ शशिध्वजः ।
प्रोवाच वदतां श्रेष्ठो भक्तिप्रवणया धिया ॥ १८ ॥

[6]शशिध्वज उवाच

बहूनां जन्मनामन्ते तीर्थक्षेत्रादियोगतः ।
दैवाद् भवेत् साधुसङ्गस्त[7]स्मादीश्वरदर्शनम् ॥ १९ ॥
ततः सालोक्यतां प्राप्य [8]भजन्त्यादृतचेतसः ।
भुक्त्वा भोगाननु[9]पमान् भक्तो भवति संसृतौ ॥ २० ॥
रजोजुषः कर्मपराः हरिपूजा[10]परायणाः ।
तन्नामानि [11]प्रगायन्ति [12]तद्रूपस्मरणोत्सुकाः ॥ २१ ॥
अवतारानुकरणपर्वव्रतमहोत्सवाः ।
भगवद्भक्ति[13]र्बहुला परमानन्दसंप्लुताः ॥ २२ ॥
[14]मोक्षं न कामयन्ते ते दृष्टमुक्तिफलोदयाः ।
[15]भुक्त्वा लभन्ते [16]जन्मानि [17]हरिप्रेमविकाशकाः ॥ २३ ॥

---

१. ग घ विमुक्तता
२. ग अहो
३. क दुर्बोध्यासि जडात्मनाम्
४. ग निमज्जयति
५. घ इति तेषां वचो भूयः श्रुत्वा राजा शशिध्वजः
६. ग राजा
७. ग ततः स्यात्
८. क भजनाहृतचेतसः
९. ग सुदुर्लभान्
१०. घ पराः सदा
११. क च
१२. ग तन्नामश्रवणोत्सुकाः
१३. घ पूजाढ्याः
१४. घ अतो मोक्षं न वाञ्छन्ति
१५. क भुक्ता
१६. क ग कर्माणि
१७. घ हरिभावप्रकाशकाः



हरिरूपाः क्षेत्रतीर्थपावना धर्मतत्पराः ।
[1]सारासारविदः सेव्यसेवका द्वैतविग्रहाः ॥ २४ ॥
यथावतारः कृष्णस्य तथा तत्सेविनामिह ।
[2]एवं निमेर्निमिषता लीला भक्तस्य लोचने ॥ २५ ॥
मुक्तस्यापि वसिष्ठस्य शरीर[3]भजनादरः ।
एतद्वः कथितं [4]भूपा माहात्म्यं [5]भक्तिभक्तयोः ॥ २६ ॥
सद्यः पापहरं पुंसां हरिभक्तिविवर्धनम् ।
सर्वेन्द्रियस्थदेवानामानन्दसुखसञ्चयम् ।
[6]कामरागादिदोषघ्नं मायामोहनिवारणम् ॥ २७ ॥
नानाशास्त्रपुराणवेदविमलव्याख्यामृताम्भोनिधिं
संमथ्यातिचिरं त्रिलोकमुनयो व्यासादयो भावुकाः ।
कृष्णे भावमनन्यमेवममलं हैयङ्गवीनं [7]नवं
लब्ध्वा संसृतिनाशनं त्रिभुवने [8]श्रीकृष्णतुल्यायते ॥ २८ ॥

[9]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
भक्तिभक्तमाहात्म्यं [10]नाम षड्विंशोऽध्यायः[11]

---

१. ग सारासाराभिज्ञाः
२. क एवं निमेर्निमीलिता भक्तस्य लोचने यथा
३. क भजनालयः
४. ग राजन्
५. क भक्तिमुक्तये
६. ग काममोहादि
७. क रसम्
८. क श्रीविष्णु
९. क × इति श्री
१०. ग × नाम
११. ग + समाप्तः

# सप्तविंशोऽध्यायः

### सूत उवाच

इति[1] राजा सभायां स कथयित्वा [2]निजाः कथाः ।
[3]सन्तोषं परमं लेभे प्राह कल्किं कृताञ्जलिः ॥ १ ॥

### [4]शशिध्वज उवाच

त्वं हि नाथ त्रिलोकेश एते भूपास्त्वदाश्रयाः ।
[5]मां तथा विद्धि राजानं त्वन्निदेशकरं [6]हरे ॥ २ ॥
तपस्तप्तुं [7]ध्रुवं यामि हरिद्वारं [8]सुनिश्चितम् ।
एते मत्पुत्रपौत्राश्च पालनीया[9]स्त्वदाश्रयाः ॥ ३ ॥
ममापि कामं जानासि पुरा जाम्बवतीं यथा ।
निधनं द्विविदस्यापि [10]तथा सर्वं सुरेश्वर ॥ ४ ॥
इत्युक्त्वा गन्तुमुद्युक्तं भार्यया सहितं नृपम् ।
लज्जयाधोमुखं कल्किं प्राहुर्भूपाः [11]किमित्युत ॥ ५ ॥
हे नाथ किमनेनोक्तं यच्छ्रुत्वा त्वमधोमुखः ।
कथं तद् ब्रूहि कामं नः किं वा नः शाधि संशयात् ॥ ६ ॥

### कल्किरुवाच

अमुं पृच्छत वो भूपा युष्माकं संशयच्छिदम् ।
शशिध्वजं [12]महाप्राज्ञं मद्भक्तिकृतनिश्चयम् ॥ ७ ॥

१. घ भूपः
२. ग निजां कथां
३. घ शशिध्वजः प्रीतमनाः
४. राजा
५. क × मां ······ त्वदाश्रयाः (३)
६. ग प्रभो
७. घ यामि कामं
८. घ मुनिप्रियम्
९. ग त्वदाश्रिताः
१०. घ तदा
११. क किमित्यहो
१२. क महाभागं



[1]कल्केर्वचनमाकर्ण्य ते भूपाः [2]प्रश्नकारिणः ।
[3]शशिध्वजं पुनः प्राहुः संशयापन्नमानसाः ॥ ८ ॥
[4]किं त्वया कथितं राजन् [5]धर्मनिष्ठ महामते ।
कथं कल्किस्तद्वदिदं श्रुत्वैवाभूदधोमुखः ॥ ९ ॥

### शशिध्वज उवाच

पुरा रामावतारेण लक्ष्मणादिन्द्रजिद्वधम् ।
लक्षं चालक्ष्य द्विविदो राक्षसत्वात् सदारुणात् ॥ १० ॥
अग्न्यागारे [6]ब्रह्मवीरवधेनैकाहिको ज्वरः ।
[7]लक्ष्मणस्य शरीरेण प्रविष्टो मोहकारकः ॥ ११ ॥
तं व्याकुलमभिप्रेक्ष्य द्विविदो भिषजां वरः ।
[8]अश्विवंशेन संजातः स्वापयामास लक्ष्मणम् ॥ १२ ॥
लिखित्वा रामभद्रस्य [9]संज्ञापत्रीमतन्द्रितः ।
लक्ष्मणं दर्शयामास ऊर्ध्वंस्तिष्ठन् [10]महाभुजः ॥ १३ ॥
[11]तां च पत्रीं समाघ्राय विज्वरोऽभूत् स लक्ष्मणः ।
[12]स ततो द्विविदं प्राह वरं वरय वानर ॥ १४ ॥
द्विविदस्तद् वचः श्रुत्वा [13]लक्ष्मणमब्रवीत् प्रियम् ।
त्वत्तो मे मरणं प्रार्थ्यं वानरत्वाच्च मोचनम् ॥ १५ ॥
पुनस्तं लक्ष्मणः प्राह मम जन्मान्तरे तव ।
मोचनं भविता [14]कीश बलरामशरीरिणः ॥ १६ ॥

१. घ इति कल्केर्वचः श्रुत्वा
२. घ प्रोक्तकारिणः
३. घ राजानं तं
४. क घ + नृपा ऊचुः
५. ग राजा
६. क ब्रजबीजवधे
७. घ मोक्ष्मणस्य
८. क अश्ववंशेन
९. क ग स्वाज्ञां चाभिगतान्वितः
१०. ग महाबली
११. घ लक्ष्मणो वीक्ष्य तां पत्रीं विज्वरो बलवानभूत्
१२. ग हसित्वा
१३. घ लक्ष्मणं प्राह हृष्टवत्
१४. घ साक्षात्

समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः ।
ऐकाहिकं ज्वरं हन्ति लिखनं यस्तु पश्यति ॥ १७ ॥

इति मन्त्राक्षरं द्वारि लिखित्वा तालपत्रके ।
[1]यस्तु पश्यति तस्यापि नश्यत्यैकाहिकज्वरः ॥ १८ ॥

इति तस्य वरं लब्ध्वा [2]चिरायुः सुस्थवानरः ।
[3]बलरामास्त्रभिन्नात्मा [4]मोक्षमापाकुतोभयम् ॥ १९ ॥

[5]नैमिषारण्ये भवत इच्छया लोमहर्षणः ।
बलरामास्त्र[6]युक्तात्मा [7]सूतपुत्रो हतस्तथा ॥ २० ॥

जाम्बवांश्च पुरा भूपा [8]वामनत्वं गते हरौ ।
तस्याप्यूर्ध्वंगतं [9]पादं तत्र चक्रे प्रदक्षिणम् ॥ २१ ॥

मनोजवं [10]तमालोक्य वामनः प्राह विस्मितः ।
मत्तो वृणु वरं काममृक्षाधीश महाबल ॥ २२ ॥

[11]प्रसन्नवदनस्तं च ब्रह्मांशो जाम्बवान् मुदा ।
प्राह [12]भो चक्रदहनान् मम मृत्युर्भविष्यति ॥ २३ ॥

इत्युक्ते वामनः प्राह कृष्णजन्मनि मे तव ।
मोक्षश्चक्रेण संभिन्न[13]शिरसः संभविष्यति ॥ २४ ॥

मम कृष्णावतारे तु सूर्यभक्तस्य भूपतेः ।
सत्राजितस्तु मण्यर्थे [14]दुर्वादः समजायत ॥ २५ ॥

---

१. क वाचयिष्यति तस्यापि
२. क चिरायुष्यं च वानरः
३. क बलरामात्मभिन्नाङ्गो
४. ग मोक्षमायागतोभयम्
५. घ तथा क्षेत्रे सूतपुत्रो निहतो
६. क मुक्ताङ्गो
७. घ नैमिषेऽभूत् तवेच्छया
८. ग वामनावतारे
९ ग पापम्
१०. घ तं निरीक्ष्य
११. घ इति तं हृष्टवदनो
१२. क ते
१३. ग शिरस्ते भविष्यति
१४. ग परीवादोऽप्यजायत



[1]मणिर्नाम कारणं हि प्रसेनस्य वधस्य च ।
सिंहात्तस्यापि मण्यर्थे वधो जाम्बवता [2]तथा ॥ २६ ॥
[3]परीवादभयात्तस्य कृष्णस्यामिततेजसः ।
मण्यन्वेषणचित्तस्य ऋक्षेणाभूद् [4]दारुणो रणः ॥ २७ ॥
स निजेशं [5]परिज्ञाय तच्चक्रग्रस्तबन्धनम् ।
मुक्तो बभूव सहसा कृष्णं पश्यन् सलक्ष्मणम् ॥ २८ ॥
[6]नवदूर्वादलश्यामं दृष्ट्वा प्रादान् निजात्मजाम् ।
तदा जाम्बवतीं कन्यां [7]प्रगृह्य मणिना सह ॥ २९ ॥
द्वारकां [8]पुरमागत्य सभायां मामुपाह्वयत् ।
आहूय मह्यं प्रददौ मणिं [9]निजगणार्चितः ॥ ३० ॥
[10]सोऽहं तां लज्जया तेन मणिना कन्यकां स्वकाम् ।
विवाहेन ददावस्मै [11]लावण्याज्जगृहे मणिम् ॥ ३१ ॥
[12]सत्यभामां तथादाय मणिं [13]मह्यं ददौ प्रभुः ।
[14]द्वारकायास्ततः पुनर्हस्तिनापुरमागतः ॥ ३२ ॥
गते [15]कृष्णे मां निहत्य शतधन्वाग्रहीन् मणिम् ।
[16]इदं सर्वं यज्जानामि पूर्वजन्मनि यत्कृतम् ॥ ३३ ॥
अतोऽहं कल्किरूपाय कृष्णाय परमात्मने ।
दत्त्वा रमां सत्यभामारूपिणीं यामि सद्गतिम् ॥ ३४ ॥

---

१. घ प्रसेनस्य मम भ्रातुर्वधस्तु मणिहेतुकः
२. ग घ कृतः
३. घ दुर्वादभयभीतस्य
४. घ रणो बिले
५. क पतिं ज्ञात्वा
६. ग × नव ··· सह
७. क विवाह्य
८. क ग पुनरागत्य
९. घ मुनिगणार्चितम्
१०. क अलीकलज्जया
११. ग न तदा
१२. घ तां सत्यभामामादाय
१३. घ मय्यप्यं स
१४. घ द्वारकामागत्य पुनर्गजाह्वयमगाद् विभुः
१५. ग प्रभो
१६. घ अतोऽहमिह
१७. घ + मिथ्याभिशापात् कृष्णस्य नैवाभून् मोचनं मम

सुदर्शनास्त्रघातेन मरणं मम काङ्क्षितम् ।
[1]मरणोऽभूदिति ज्ञात्वा रणे[2] वाञ्छामि मोचनम् ॥ ३५ ॥
इत्यसौ जगतामीशः कल्किः श्वशुरघातनम् ।
श्रुत्वैवाधोमुखस्तस्थौ ह्रिया धर्मभिया [3]प्रभुः ॥ ३६ ॥
[4]अत्याश्चर्यमपूर्वमुत्तममिदं श्रुत्वा नृपा विस्मिता
लोकाः संसदि हर्षिता मुनिगणाः [5]कल्केर्गु[6]णाकर्षिताः ।
आख्यानं परमादरेण सुखदं धन्यं यशस्यं परं
श्रीमद्भूपशशिध्वजेरितवचो मोक्षप्रदं चाभवन् ॥ ३७ ॥

[7]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[8]रणाख्यानं [9]नाम सप्तविंशोऽध्यायः ।[10]

१. क न रणोऽभूत्
२. क वने
३. ग विभुः
४. क इत्याश्चर्य
५. ग राज्ञो
६. क गणाकर्षिताः
७. क × इति श्री
८. घ शशिध्वजेरितचक्रमरणाख्यानं
९. ग × नाम
१०. ग + समाप्तः

# अष्टाविंशोऽध्यायः

## सूत उवाच

ततः कल्किर्महातेजाः श्वशुरं तं शशिध्वजम् ।
समामन्त्र्य [1]समाश्वास्य सह [2]भूपैश्च प्रस्थितः ॥ १ ॥
शशिध्वजो वरं लब्ध्वा [3]सुदुर्लभं महेश्वरीम् ।
स्तुत्वा मायां त्यक्तमायः सप्रियः प्रययौ वनम् ॥ २ ॥
कल्किः [4]सैन्यपरावृतः प्रययौ काञ्चनीं पुरीम् ।
गिरिदुर्गावृतां गुप्तां भोगिभि[5]र्विषवर्षिभिः ॥ ३ ॥
विदार्य दुर्गं सगणः कल्किः [6]शत्रुनिपीडकः ।
छित्वा विषायुधान् बाणैस्तां पुरीं [7]प्रविवेश ह ॥ ४ ॥
मणिकाञ्चनचित्राढ्यां नागकन्या [8]समर्चिताम् ।
हरिचन्दनवृक्षाढ्यां मनुजैः परिवर्जिताम् ॥ ५ ॥
[9]नागपुरी तथा रम्या [10]नराणां भयदायिनी ।
[11]नागानां स्त्रीभिः संकीर्णा किं यास्यामो वदन्त्विह ॥ ६ ॥
इतिकर्तव्यताव्यग्रं रमानाथं हरिं प्रभुम् ।
भूपांस्तदनुरूपांश्च खे वागाहाशरीरिणी ॥ ७ ॥

१. घ वचश्चित्रैः
२. घ भूपैर्ययौ हरिः
३. ग घ यथाकामं
४. घ सेनागणैः सार्द्धं
५. ग विषवर्त्तिभिः
६. घ परपुरञ्जयः
७. घ ददर्शोऽच्युतः
८. ग घ गणावृताम्
९. ग तां ददर्श कल्किरसौ पुरीं नाम भयङ्करीं, घ विलोक्य कल्किः प्रहसन् प्राह भूपान् किमित्यहो
१०. ग घ सर्पस्येयं पुरी
११. ग नरेषु
१२. घ नागनारीगणाकीर्णा

विलोक्य [1]नेमां सेनाभिः प्रवेष्टुं [2]भोस्त्वमर्हसि ।
त्वां विनान्ये मरिष्यन्ति [3]विषकन्यादृशादपि ॥ ८ ॥

आकाशवाणीमाकर्ण्य कल्किः शुकसहायकृत् ।
ययावेकः खड्गधरस्तुरगेण [4]च सत्वरम् ॥ ९ ॥

गत्वा तां ददृशे वीरो [5]धीराणां धैर्यनाशिनीम् ।
रूपेणालक्ष्य लक्ष्मीशं प्राह प्रहसितानना ॥ १० ॥

### विषकन्योवाच

[8]संसारे मे नयनोरुद्वीक्षणक्षीणदेहाः
लोका भूपाः कति कति गता मृत्युमत्युग्रवीर्याः ।
साहं दीनासुरसुरनरप्रेक्षणप्रेमहीना
ते [9]नेत्राब्जद्वयरससुधाप्लाविता त्वां नमामि ॥ ११ ॥

क्वाहं विषेक्षणादीना क्वामृतेक्षणसङ्गमः ।
भवेऽस्मिन् भाग्यहीनायाः केनाहो तपसा कृतः ॥ १२ ॥

### कल्किरुवाच

[10]क्वस्य कन्यासि सुश्रोणि कस्मादेषा गतिस्तव ।
ब्रूहि मां कर्मणा केन [11]विषनेत्रं तवाभवत् ॥ १३ ॥

१. क मार्गं
२. क न
३. क विषकन्येक्षणादपि
४. घ त्वरान्वितः
५. क वीराणां
६. क + रूपेणाप्रतिमं लोके तं ददर्श महाभुजम्
विषहृतं दग्धदेहं पुराणपुरुषं प्रभुम्
कल्किः श्रीलक्ष्मणं देवं प्राह प्रहसिताननः
७. ग ×
८. घ संसारेऽस्मिन् मम नयनोर्वीक्षणक्षीदेदा
९. क नेत्राशुद्वयपरमरसप्लाविता
१०. घ कासि
११. क विषनेत्रे



### विषकन्योवाच

चित्रग्रीवस्य भार्याहं गन्धर्वस्य महामते ।
सुलोचनेति विख्याता [1]पतिप्रेमविवर्धिनी ॥ १४ ॥

[2]कदाप्यहं विमानेन [3]पत्या पीठेन सङ्गता ।
गन्धमादनकुञ्जेषु रेमे [4]कामकलातुरा ॥ १५ ॥

तत्र [5]यक्षमुनिं दृष्ट्वा विकृताकारमातुरम् ।
रूपयौवनगर्वेण [6]कटाक्षेणाहसं मदात् ॥ १६ ॥

सोपालम्भं [7]मुनिः श्रुत्वा वचनं च ममाप्रियम् ।
शशाप मां क्रुधा तत्र तेनाहं विषदर्शना ॥ १७ ॥

निक्षिप्ताहं [8]सर्पपुरे काञ्चन्यां नागिनीगणे ।
पतिहीना दैवहीना चरामि विषवर्षिणी ॥ १८ ॥

न जाने केन तपसा भवद्दृष्टिपथं गता ।
त्यक्तशापा[9]मृताक्षाहं पतिलोकं [10]व्रजामि च ॥ १९ ॥

अहो [11]तेषामस्तु शापः प्रसादो मा सतामिह ।
पत्युः [12]शापादृषेर्मोक्षात् तव पादाब्जदर्शनम् ॥ २० ॥

इत्युक्त्वा सा ययौ स्वर्गं विमानेनार्कवर्चसा ।
कल्किस्तु [13]तत्पुराधीशं [14]नृपं चक्रे महामतिम् ॥ २१ ॥

१. घ पत्युरत्यन्तकामदा
२. ग घ एकदाहं
३. क शय्या
४. घ कामकलाकुला
५. ग कुब्जं मुनिं
६. क छलेन
७ ग वचः
८. क सर्पपुर्याम्
९. क मृताख्याहम्
१०. ग घ व्रजाम्यतः
११. क एतामस्तु
१२. क पापात्
१३. क तत्सुराधीशम्
१४. क मरुम्

[1]अमर्षस्तत्सुतो धीमान् [2]सहस्रो नाम तत्सुतः ।
[3]सहस्रतः सुतश्चासीद् राजा [4]विश्रुतवानिति ॥ २२ ॥

[5]बृहन्नलानां भूपानां [6]संभूता यस्य वंशजाः ।
तं [7]मनुं भूपशार्दूलं नानामुनिगणैर्वृतः ।
अयोध्यायां चाभिषिच्य मथुरामगमद्धरिः ॥ २३ ॥

तस्यां भूपं सूर्यकेतुमभिषिच्य [8]महाप्रभुम् ।
भूपं चक्रे ततो गत्वा देवापिं वारणावते ॥ २४ ॥

[9]अरिस्थलं वृकस्थलं [10]माकन्दं हस्तिनापुरम् ।
पञ्चदेशेश्वरं [11]कृत्वा हरिः शम्भलमाययौ ॥ २५ ॥

शौम्भं पौण्ड्रं पुलिन्दं च सुराष्ट्रं मगधं तथा ।
कविप्राज्ञ[12]सुमन्तेभ्यः प्रददौ भ्रातृवत्सलः ॥ २६ ॥

कीकटं मध्यकर्णाटमन्ध्रमोड्रं कलिङ्गकम् ।
अङ्गं वङ्गं स्वगोत्रेभ्यः प्रददौ [13]जगदीश्वरः ॥ २७ ॥

स्वयं शम्भलमध्यस्थः [14]कङ्केन कलापकान् ।
[15]देशान् विशाखयूपाय प्रादात् [16]कल्किरुदारधीः ॥ २८ ॥

चोलबर्बरकर्वाख्यान् द्वारकादेशमध्यगान् ।
[17]स्वपुत्रेभ्यः ददौ कल्किः [18]कृतवर्मपुरस्कृतान् ॥ २९ ॥

---

१. क + प्रसुश्रुतो मरुसुतः सुसन्धिस्तस्य चात्मजः
२. क सहस्रं नामतः सुतः
३. क सहस्रस्य
४. घ विश्रुतवानसि
५. क बृहद्बलाख्या भूपालाः
६. ग तत्रासन्
७. क मरुम्
८. क महाप्रभुः
९. क अविस्थलम्
१०. घ माकन्दं च गजाह्वयम्
११. क गत्वा
१२. ग सुमन्त्रेभ्यः
१३. ग स नरेश्वरः
१४. क कङ्कचोलकपायकान्
१५. ग घ देशं
१६. घ कल्किः प्रतापवान्
१७. घ पुत्रेभ्यः प्रददौ
१८. क कृतधर्मपुरस्कृतान्



पित्रे धनानि रत्नानि ददौ परम[1]भक्तितः ।
[2]तथा प्रजाः समाश्वास्य [3]शम्भलग्रामवासिनः ॥ ३० ॥

पद्मया रमया कल्किर्गृहस्थो मुमुदे भृशम् ।
धर्मश्चतुष्पादभवत् [4]कृतपूर्णं जगत्त्रयम् ॥ ३१ ॥

देवा [5]यथोक्तफलदाश्चरन्ति भुवि सर्वतः ।
[6]मही शस्यसमृद्धासीद् हृष्टपुष्टा [7]जनास्तथा ।
शाठ्यचौर्यानृतैर्हीना आधिव्याधिविवर्जिताः ॥ ३२ ॥

विप्रा वेदविदः सुमङ्गलयुता नार्यस्तु [8]चार्याव्रतैः
पूजाहोमपराः पतिव्रतधरा यागोद्यताः क्षत्रियाः ।
वैश्या वस्तुषु धर्मतो विनिमयैः श्रीविष्णुपूजापराः
शूद्रास्तु द्विजसेवनाद्धरिकथालापाः सपर्यापराः ॥ ३३ ॥

[9]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
विषकन्यामोक्ष[10]धर्मप्रवृत्तिकथनं [11]नाम अष्टाविंशोऽध्यायः[12]

---

१. ग भक्तिमान्
२. घ × तथा
३. घ + हरिः
४. क कृतपुण्यम्
५. ग यथेच्छदातारः
६. घ सर्वशस्या वसुमती
७. जनावृताः
८. क कुमारीव्रतैः
९. क × इति श्री
१०. घ + कृत
११. ग × नाम
१२. ग + समाप्तः

# ऊनत्रिंशोऽध्यायः

## शौनक उवाच

शशिध्वजः [1]कथं स्तौति मायां नाम महाराजः ।
का वा मायास्तुतिः [2]सूत वद तत्त्वविदां वर ॥ १ ॥
[3]त्वं वैष्णवो व्यासशिष्यः स राजा हरिसेवकः ।
[4]यावत् कथा हरिकथा सात्रोच्या वाग्विशुद्धये ॥ २ ॥

## सूत उवाच

शृणुध्वं मुनयः सर्वे मार्कण्डेयाय पृच्छते ।
शुकः प्राह [5]प्रसन्नात्मा मायास्तवमनुत्तमम् ॥ ३ ॥
[6]तमहं वः प्रवक्ष्यामि यथाधीतं यथाश्रुतम् ।
सर्वकामप्रदं नृणां पापतापविनाशनम् ॥ ४ ॥

## शुक उवाच

भल्लाटनगरं त्यक्त्वा विष्णुभक्तः शशिध्वजः ।
आत्मसंसारमोक्षाय माया[7]स्तवमिमं जगौ ॥ ५ ॥

## शशिध्वज उवाच

ॐ ह्लींकारां सत्त्वसारां विशुद्धां ब्रह्मादीनां मातरं वेदबोध्याम् ।
तन्वीं स्वाहां भूततन्मात्रकक्षां वन्दे वन्द्यां देवगन्धर्वभूतेः[8] ॥ ६ ॥
लोकातीतां [9]द्वैतभूतां समीडे भूतैर्भव्यां व्याससामासिकाद्यैः ।
विद्वद्गीतां [10]कालकल्लोललोलां लीलापाङ्गक्षिप्तसंसारदुर्गाम् ॥ ७ ॥

---

१. घ महाराजः स्तुत्वा मायां गतः कुतः २. ग आसीत् सूत त्वं वद विस्तरं
३. घ × त्वं ‥ हरिसेवकः ४. घ या त्वत्कथा विष्णुकथा वक्तव्या सा विशुद्धये
५. घ विशुद्धात्मा ६. क तच्छृणुध्वं
७. घ स्तवमलं ८. घ सिद्धैः
९. ग द्वैतलीलाम् १०. ग कामकल्लोल



पूर्णां प्राप्यां द्वैतलभ्यां शरण्यामाद्ये [1]शेषे मध्यतो या विभाति ।
[2]कालो दैवं कर्म चोपाधयो ये तस्यां भाषा तां विशिष्टां नमामि ॥ ८ ॥
भूमौ गन्धो रसताप्सु प्रतिष्ठा रूपं तेजस्येव वायौ स्पृशत्वम् ।
खे शब्दो वा [3]यच्चिदाभास्ति [4]तामाद्यां त्वां विश्वरूपां नमामि ॥ ९ ॥
सावित्री त्वं ब्रह्मरूपा भवानी भूतेशस्य श्रीपतेः श्रीस्वरूपा ।
शची शक्रस्यापि नाकेश्वरस्य पत्नी श्रेष्ठा भासि माये जगत्सु ॥१०॥
बाल्ये बाला युवती यौवने त्वं वार्धक्ये या [5]स्थविरा कालकल्पा ।
[6]नानाकारैर्योगयोगैरुपास्या [7]ज्ञानातीता [8]कामरूपा विभासि ॥११॥
[9]तव चरणसरोजं देवि देवादिवन्द्यं
यदि हृदयसरोजे भावयन्तीह भक्त्या ।
[10]श्रुतियुगकुहरे वा संश्रुतं धर्मसम्प-
ज्जनयति जगदाद्ये सर्वसिद्धिं च तेषाम् ॥ १२ ॥
मायास्तवमिदं पुण्यं शुकदेवेन भाषितम् ।
मार्कण्डेयाद[11]वाप्यासौ सिद्धिं लेभे शशिध्वजः ॥ १३ ॥
कोकामुखे तपस्तप्त्वा हरिं ध्यात्वा वनान्तरे ।
सुदर्शनेन निहतो वैकुण्ठं शरणं ययौ ॥ १४ ॥

[12]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
मायास्तवो [13]नाम एकोनत्रिंशोऽध्यायः[14] ।

---

१. क देशे २. घ + नानारूपैर्देवतिर्यङ्मनुष्यैस्तामाधारां ब्रह्मरूपां नमामि ।
यस्या भाषा त्रिजगद् भाति भूतैर्न भात्येतत्तदभावे विधातुः ।
३. क यद्धिदा भान्ति ४. घ मताभ्येतां
५. ग स्थविराकारकल्पा ६. क नानाकारैर्या परागैः प्रलभ्या
७. क धर्मोद्रिक्ता ८. ग कान्तवक्त्रा
९ घ + वरेण्या त्वं वरदा लोकसिद्धया साध्वी धन्या लोकमान्या सुकन्या ।
चण्डी दुर्गा कालिका कालिकाख्या नानादेशे रूपवेशैर्विभासि ।
१०. क त्रिभुवनजगदीशे सेवकास्तापहीना
दिवि भुवि चरणायां कार्यसिद्धिश्च तेषाम् ११. घ अवप्यापि
१२. क × इति श्री १३. ग × नाम
१४. ग + समाप्तः

# त्रिंशोऽध्यायः

## सूत उवाच

[1]तत् सर्वं कथितं विप्राः शशिध्वज[2]विमोक्षणम् ।
कल्केः कथाम[3]प्रतिमां शृण्वन्तु [4]वाग्विदां वराः ॥ १ ॥
वेदो धर्मः कृतयुगं देवा लोकाश्चराचराः ।
हृष्टा [5]जाताः सुसन्तुष्टाः कल्कौ राजनि [6]शासति ॥ २ ॥
नानादेवादिलिङ्गेषु भूषणैर्भूषितेषु च ।
इन्द्रजालिकवद्वृत्तिकल्पकाः पूजका [7]जनाः ॥ ३ ॥
न सन्ति [8]मायामोहाढ्याः पाषण्डाः साधुवञ्चकाः ।
तिलकाचितसर्वाङ्गा [9]कल्कौ राजनि कुत्रचित् ॥ ४ ॥
शम्भले वसतस्तस्य पद्मया रमया सह ।
[10]ऐच्छद् विष्णुयशाः पुत्रं देवान् यष्टुं [11]कृपापरान् ॥ ५ ॥
तच्छ्रुत्वा प्राह पितरं कल्किः [12]परमधार्मिकः ।
विनयावनतो भूत्वा [13]सर्वकामस्य सिद्धये ॥ ६ ॥
राजसूयैर्वाजपेयैरश्वमेधैर्महामखैः ।
नानायागैः कर्मतन्त्रैरीजे [14]यज्ञेश्वरं प्रभुम् ॥ ७ ॥

---

१. घ एतद् वः
२. क ग विमोचनम्
३. ग अतुलां
४. घ विबुधर्षभाः
५. घ पुष्टाः
६. घ चाभवम्
७. ग प्रजाः
८. क मणिजालाढ्या
९. क ग भण्डा तत्र च
१०. घ प्राह
११. घ जगद्धितान्
१२. घ परमहर्षितः
१३. घ धर्मकामार्थसिद्धये
१४. घ ऋतुपतिं हरिम्



[1]कृपरामवसिष्ठाद्यैर्व्यासधौम्यकृतव्रणैः ।
अश्वत्थाममधुच्छन्दो[2]मन्दपालैर्महात्मनः ॥ ८ ॥
गङ्गायमुनयोर्मध्ये स्नात्वावभृथमादरात् ।
दक्षिणाभिः समभ्यर्च्य ब्राह्मणान् वेदपारगान् ॥ ९ ॥
[3]चर्व्यैश्चोष्यैश्च पेयैश्च [4]पूगशष्कुलियावकैः ।
मधुमांसैर्मूलफलै[5]रन्यैश्च विविधै[6]श्च तान् ॥ १० ॥
भोजयामास विधिवत् [7]तृप्ता बभूवुर्ब्राह्मणाः ।
यत्र वह्निर्वृतः पाके वरुणो जलदो [8]मरुत् ॥ ११ ॥
परिवेष्टा द्विजान् कामैः [9]सदन्नाद्यैरतोषयत् ।
[10]गीतनृत्यादिभी रङ्गैः पितृयज्ञमहोत्सवैः ॥ १२ ॥
कल्किः कमलपत्राक्षः [11]प्रहृष्टः प्रददौ [12]वसु ।
[13]स्त्रीबालस्थविरादिभ्यः सर्वेभ्यश्च यथोचितम् ॥ १३ ॥
[14]दत्त्वा [15]दानानि पात्रेभ्यो ब्राह्मणेभ्यः स ईश्वरः ।
[16]गङ्गातीरमभजत पितृवाक्यानुमोदितः ॥ १४ ॥
सभायां विष्णुयशसः पूर्वराजकथाः प्रियाः ।
[17]आलपन्तो हर्षयन्तो [18]कथयन्तः पुनः पुनः ॥ १५ ॥

---

१. क ग कृष्ण
२. क अन्नपानैः
३. ग भक्ष्यैर्भोज्यैश्च
४. क गोधूमपूगयावकैः
५. क ग रत्नैश्च
६. घ द्विजान्
७. ग घ सर्वकर्मसमृद्धिभिः
८. क महत्
९. ग सुवर्णाद्यैः
१०. घ वाद्यैर्नृत्यैश्च गीतैश्च
११. ग प्रहृष्टः
१२. ग बहु
१३. क बालवृद्धस्त्रीपुंभ्यश्च
१४. घ + रम्भा तालधरा नन्दी हूहूर्गायति नृत्यति
१५. क + तदान्याकाशवसतिमापुरा रौति साम्प्रतम्
१६. घ उवास तीरे गङ्गायाः
१७. कथयन्तो हसन्तश्च
१८. घ द्विजा बुधाः

तत्रागतस्तुम्बुरुणा [1]देवर्षिनारदस्तथा ।
तं पूजयामास मुदा [2]पित्रा सह यथाविधि ॥ १६ ॥
[3]तथा संपूज्य [4]राजाह विनयेन कृताञ्जलिः ।
नारदं वैष्णवं प्रीत्या वीणापाणिं महामुनिम् ॥ १७ ॥

## विष्णुयशा उवाच

अहो भाग्यं [5]दुस्थितस्य मम [6]जन्मशतार्जितम् ।
[7]भवद्विधमहात्मनां यन्मे मोक्षाय दर्शनम् ॥ १८ ॥
अद्याग्नयश्च सुहुतास्तृप्ता [8]हि पितरः परम् ।
देवाश्च परिसन्तुष्टास्तवा[9]गमनकारणात् ॥ १९ ॥
यत्पूजायां भवेत् पूज्यो [10]विष्णुर्यन् मम दर्शनम् ।
[11]पापश्च विलयं याति भवतां पुण्यदर्शनात् ॥ २० ॥
साधूनां [12]हृदयं धर्मो [13]वाचो [14]देवाः [15]सनातनाः ।
कर्मक्षयाणि कर्माणि यतः साधुर्हरिः स्वयम् ॥ २१ ॥
मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये ।
यथावतारे कृष्णस्य सतो दुष्ट[16]निपीडने ॥ २२ ॥
[17]त्वमेव हि परा बुद्धिर्मायासंसारवारिधौ ।
नौकायां विष्णुभक्त्या च कर्णधारोऽसि पारकृत् ॥ २३ ॥

---

१. घ नारदः सुरपूजितः
२. ग पितामहं
३. घ तौ
४. ग घ विष्णुयशाः प्रोवाच विनयान्वितः
५. घ अहो भाग्यं
६. क ग जन्मसुखान्वितम्
७. घ भवद्विधानां पूजा
८. घ च
९. घ अवेक्षणपूजनात्
१०. क दृष्ट्वा नयनदर्शनम्
११. घ पापसङ्गं स्पर्शनाच्च किमहो साधुसंगमः
१२. हृदये
१३. ग वाचि
१४. क वेदाः
१५. ग प्रतिष्ठिताः
१६. घ विनिग्रहे
१७. घ पृच्छामि त्वामतो ब्रह्मन्



[1]पृच्छामि त्वामतो केन निर्वाणपदमुत्तमम् ।
लप्स्यामीह जगद्बन्धो कर्मणा शर्म तद्वद ॥ २४ ॥

## नारद उवाच

अहो बलवती माया सर्वाश्चर्यमयी [2]शुभा ।
पितरं मातरं [3]विष्णुर्न मोचयति कर्हिचित् ॥ २५ ॥
[4]स्वयं नारायणो यस्य सुतः कल्किर्जगत्पतिः ।
तं विहाय [5]महाराज मत्तो [6]मुक्तिमभीप्सति ॥ २६ ॥
[7]विचिन्त्येत्थं ब्रह्मसुतः [8]कल्किः प्राह जगद्गुरुम् ।
विविक्ते विष्णुयशसं ब्रह्मसंपद्विवर्द्धनम् ॥ २७ ॥

## [9]नारद उवाच

[10]देहावसाने जीवं सा दृष्ट्वा देहावलम्बनम् ।
[11]मायाह मर्तुमिच्छन्तं यन्मे तच्छृणु [12]मोक्षदम् ॥ २८ ॥
विन्ध्याद्रौ रमणी भूत्वा [13]मायोवाच [14]जीवं प्रति ।

## मायोवाच

अहं माया मया त्यक्तः कथं जीवितुमिच्छसि ॥ २९ ॥

## जीव उवाच

नाहं जीवाम्यहो माये कायेऽस्मिञ्जी[15]वनाश्रये ।
अहमित्यन्यथाबुद्धिर्विना देहं कथं [16]भवेत् ॥ ३० ॥

---

१. ग घ केनाहं यातनागारात्
२. क मता
३. घ विष्णुर्नैव मुञ्चति
४. पूर्णो
५. घ विष्णुयशा
६. क मुक्तिमवाप्स्यति
७. घ विविचेत्थं
८. ग घ प्राह ब्रह्मयशः सुतम्
९. ग ऋषि
१०. क × देहावसाने······देहाबलम्बनम्
११. क मायया सदनुष्ठानं
१२. ग पुण्यदम्
१३. क मामालिङ्ग्य
१४. घ यथेच्छया
१५. क जीवनाश्रमे
१६. क तव

**मायोवाच**

देहबन्धे यथाश्लेषास्तथा बुद्धिः कथं तव ।
मायाधीनां विना चेष्टां विशिष्टां ते कुतो वद ॥ ३१ ॥

**मायोवाच**

मायया [1]जीवति [2]जन्तुश्चेष्टते हतचेतनः ।
निःसारः [3]बलवद् भाति गजभुक्तकपित्थवत् ॥ ३२ ॥

**जीव उवाच**

मम संसर्गजाता त्वं नानानामस्वरूपिणी ।
[4]कथं मां निन्दसि [5]मूढे स्वैरिणी स्वामिनं यथा ॥ ३३ ॥
ममाभावे तवाभावः प्रोद्यत्सूर्ये तमो यथा ।
मामावार्यं [6]प्रकाशस्ते रविं नवघनो यथा ॥ ३४ ॥
[7]लीलाबीजकुशूलासि मम माये जगन्मये ।
नाद्यन्ते मध्यतो भासि नानात्वादिन्द्रजालवत् ॥ ३५ ॥
एवं निर्विषयं नित्यं मनोव्यापारवर्जितम् ।
अभौतिकमजीवं च शरीरं वीक्ष्य सात्यजत् ॥ ३६ ॥
[8]विहाय मां[9] ददौ शापमिति लोके तवाप्रिय ।
न स्थितिर्भ[10]विता काष्ठकुड्योपम कथञ्चन ॥ ३७ ॥
सा माया तव पुत्रस्य कल्केर्विश्वात्मनः प्रभोः ।
तां विज्ञाय यथाकामं चर गां [11]हरिभावनः ॥ ३८ ॥
[12]विष्णौ जगदिदं ज्ञात्वा विष्णुर्जगति वासकृत् ।
[13]निर्ममो निरहङ्कारः सर्वतो विरतो भव ॥ ३९ ॥

---

१. घ + जीव उवाच—मा विना प्राज्ञता माये प्रकाशविषतस्पृहा
२. घ मर  ३. घ सारवद
४. ग घ × कथं  ५. ग घ + किं
६. घ विभासि त्वं  ७. क लीलाजीवितलासिन्यै
८. ग घ त्यक्त्वा  ९. ग घ + सा
१०. क विदिता  ११. क हरितः परम्
१२. घ + निराशो निर्ममः शान्तः सर्वभोगेषु निस्पृहः  १३. ग घ आत्मनात्मानमावेश्य



एवं तं [1]महाराजमामन्त्र्य च मुनीश्वरौ ।
कल्किं [2]प्रणम्य बहुशो जग्मतुः कपिलाश्रमम् ॥ ४० ॥
[3]नारदावेदितमित्थं कल्किं सुतमनुत्तमम् ।
नारायणं [4]तथामन्त्र्य वनं विष्णुयशा ययौ ॥ ४१ ॥
[5]बदरिकाश्रमं प्राप्य तपस्तप्त्वा सुदारुणम् ।
जीवं बृहति संयोज्य पूर्णस्तत्याज भौतिकम् ॥ ४२ ॥
मृतं [6]स्वामिनमालिङ्ग्य सुमतिः [7]स्नेहविक्लवा ।
विवेश [8]दहनं साध्वी [9]सुरेशैर्दिवि संस्तुता ॥ ४३ ॥
कल्किः श्रुत्वा मुनिमुखात् पित्रोर्नि[10]र्याणमीश्वरः ।
[11]शोकं निगृह्य रभसा पित्रोः समकरोत् क्रियाम् ॥ ४४ ॥
पद्मया रमया कल्किः शम्भले सुर[12]वाञ्छिते ।
चकार राज्यं धर्मात्मा लोकवेद[13]पुरस्कृतः ॥ ४५ ॥
महेन्द्रशिखराद् रामस्तीर्थपर्यटनादृतः ।
प्रायात् कल्केर्दर्शनार्थं शम्भलं [14]तीर्थतीर्थकृत् ॥ ४६ ॥
[15]आगन्तुकं मुनिं दृष्ट्वा कल्किः परममोदितः ।
प्रहृष्टो विधिवत् पूजां चक्रे तस्य महात्मनः ॥ ४७ ॥

---

१. घ विष्णुयशसं  २. घ प्रदक्षिणीकृत्य
३. घ नारदेरितमाकर्ण्य  ४. घ जगन्नाथं
५. घ गत्वा बदरिकारण्यं  ६. क स्वामिनमालोक्य
७. ग स्नेहविह्वला  ८. क ग ज्वलनं
९. घ सुवेशैः  १०. क मरणम्
११. घ सबाष्पनयनं स्नेहात्  १२. क सत्कृते
१३. क यथानुगः  १४. क तीर्थमादिकृत्
१५. घ तं दृष्ट्वा सहसोत्थाय पद्मया रमया सह ।
कल्किः प्रहर्षो विधिवत् पूजां चक्रे विधानवित् ।

नानारसैर्गुणमयै[1]र्मुनिर्भुक्त्वा यथोचितम् ।
पर्यङ्के[2]ऽमूल्यवस्त्राढ्ये [3]शयित्वा च मुदं ययौ ॥ ४८ ॥

तं भुक्तवन्तं विश्रान्तं पादसंवाहनैर्गुरुम् ।
संतोष्य [4]विनयापन्नः कल्किर्मधुरमब्रवीत् ॥ ४९ ॥

[5]धर्मार्थकाममोक्षाणां प्रदातासि त्वमेव नः ।
[6]तदा पद्मा रमा प्राह शृणु [7]प्रभो निवेदनम् ॥ ५० ॥

[8]व्रतजपनियमैर्वा ध्यानैर्वेदपारायणैः ।
पुत्रलाभो यथा वा स्यात् वरं देहि तथैव नः ॥ ५१ ॥

[9]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
विष्णुयशसो मोक्षे रामदर्शनं [10]नाम त्रिंशोऽध्यायः[11]

---

१. ग घ भोजयित्वा विचित्रिते
२. घ अनर्के
३. घ शाययित्वा
४. घ च सविनयम्
५. घ तव प्रसदात् सिद्धं मे गुरो त्रैवर्गिकं च यत्
६. घ शशिध्वजसुतायास्तु
७. घ राम निवेदितम्
८. घ इति पतिवचनं निशम्य राम निजहृदयेप्सितपुत्रलाभमिष्टम् ।
व्रतजपनियमैर्यमैश्च कैर्वा मम भवतीह मुदाह जामदग्न्यम् ।
९. क × इति श्री
१०. ग × नाम
११. ग + समाप्तः

# एकत्रिंशोऽध्यायः

## सूत उवाच

जामदग्न्यः समाकर्ण्य [1]रमायाः पुत्रकामनाम् ।
कल्केरभिमतं [2]ज्ञात्वाकारयद् रुक्मिणीव्रतम् ॥ १ ॥
[3]व्रतेन तेन च रमा [4]पुत्राढ्या सुभगा सती ।
[5]सर्वभाग्येन संयुक्ता बभूव स्थिरयौवना ॥ २ ॥

## शौनक उवाच

विधानं ब्रूहि मे सूत व्रतस्यास्य च यत् फलम् ।
पुरा केन कृतं धर्म्यं रुक्मिणीव्रतमुत्तमम् ॥ ३ ॥

## सूत उवाच

शृणु ब्रह्मन् राजपुत्री शर्मिष्ठा [6]वरवर्णिनी ।
अवगाह्य सरोनीरं सोमं [7]हरमपश्यत ॥ ४ ॥
सा सखीभिः परिवृता देवयान्या च संगता ।
[8]देवभीत्या समुत्थाय पर्यधुर्वसनं द्रुतम् ॥ ५ ॥
[9]तत्रात्मनो वस्त्रवतीं शुक्रकन्यां ददर्श ताम् ।
[10]शर्मिष्ठा कुपिता प्राह वसनं त्यज भिक्षुकि ॥ ६ ॥
[11]रुष्टा दानवकन्या सा [12]देवयानीं निपीड्य च ।
[13]आत्मनो वाससा बद्ध्वा कूपे क्षिप्त्वा गता गृहम् ॥ ७ ॥

---

१. घ रमां तां पुत्रवर्द्धिनीम्
२. बुद्ध्वा
३. ग व्रतानुष्ठानेन तेन
४. क पुत्रीया
५. घ सर्वभोगेन
६. घ वार्षपर्वणी
७. क दूर
८. ग हराद् भीता, घ शम्भुभीत्या
९. घ तत्र शुक्रस्य कन्याया वस्त्रवत्ययमात्मनः
१०. ग घ संलक्ष्य
११. ग घ इति
१२. घ दासीभिः परिवारिता
१३. घ तां तस्या

तां मग्नां रुदतीं कूपे जलार्थी नहुषात्मजः ।
करे स्पृश्य समुद्धृत्य प्राह [1]कस्यासि भामिनी ॥ ८ ॥
सा [2]शुक्रपुत्री वसनं परिधाय ह्रिया भिया ।
[3]शर्मिष्ठायाः कृतं सर्वं[4]मित्याह नृपमोक्षती ॥ ९ ॥
ययातिस्तदभिप्रायं ज्ञात्वानुव्रज्य शोभनम् ।
[5]समाश्वास्य ययौ गेहं तस्याः परिणयादृतः ॥ १० ॥
[6]देवयानी गृहं गत्वा प्राह सर्वं स्वपित्रे च ।
तच्छ्रुत्वा कुपितं [7]शुक्रं वृषपर्वाह सान्त्वयन् ॥ ११ ॥
[8]दण्डं धारय मे ब्रह्मन् [9]कोपो यद्यस्ति ते मयि ।
शर्मिष्ठां वाप्यपकृतां कुरु यन् मनसेप्सितम् ॥ १२ ॥
[10]पितृपादे न तं दृष्ट्वा देवयानी रुषाब्रवीत् ।
[11]शर्मिष्ठा तव कन्या [12]वै मम दासी भवत्विति ॥ १३ ॥
समानीय तदा राजा दास्ये तां [13]विनियुज्य सः ।
ययौ निजगृहं ज्ञानी [14]दैवं परमकं स्मरन् ॥ १४ ॥
ततः शुक्र[15]स्तमानीय ययातिं प्रतिलोमकम् ।
तस्मै ददौ [16]शर्मिष्ठां च देवयानीं तया सह ॥ १५ ॥

१. घ का त्वं वरानने
२. क देवयानी
३. क शर्मिष्ठया
४. घ प्राह राजानमीक्षती
५. घ आश्वास्य तां
६. घ सा गत्वा भवनं शुक्रं प्राह शर्मिष्ठया कृतम्
७. घ विप्रं
८. घ दण्ड्यं मां दण्डय
९. क रोषो
१०. घ राजानं प्रणतं पादे पितुर्दृष्ट्वा
११. घ देवयानी त्वियं
१२. घ × वै
१३. क विनियोज्य
१४. ग सर्वं दैवाधीनं
१५. ग समाहूय
१६. घ तां विधिवत्



दत्त्वा प्राह नृपं विप्रोऽप्येनां राजसुतां यदि ।
[1]शयने ह्वयसे सद्यो जरा त्वामुपभोक्ष्यति ॥ १६ ॥
शुक्रस्यैतद् वचः श्रुत्वा राजा तां [2]वरवर्णिनीम् ।
अदृश्यां स्थापयामास देवयान्यनुगां भिया ॥ १७ ॥
सा शर्मिष्ठा [3]राजपुत्री [4]दुःखेनोद्विग्नमानसा ।
[5]देवयानीं सेवमाना नित्यं दासीभिर्वर्त्तते ॥ १८ ॥
एकदा सा [6]वनगता [7]रोदिति जाह्नवीतटे ।
विश्वामित्रं मुनिं [8]तत्र ददृशे स्त्रीभिरावृतम् ॥ १९ ॥
व्रतिनं पुण्यगन्धाभिः [9]सुरूपाभिः सुवासितम् ।
कारयन्तं व्रतं माल्यधूप[10]दीपोपहारकैः ॥ २० ॥
निर्मायाष्टदलं पद्मं वेदिकायां[11] सुचिह्नितम् ।
रम्भापोतैश्चतुर्भिस्तु चतुष्कोणं विराजितम् ॥ २१ ॥
वाससा निर्मितगृहे स्वर्णपट्टै[12]र्विचित्रिते ।
निर्मितं श्रीवासुदेवं नानारत्नविघट्टितम् ॥ २२ ॥
[13]वेदपुरुषसूक्तेन नानागन्धोदकैः शुभैः ।
पञ्चामृतैः पञ्चगव्यै[14]र्यथामन्त्रैर्द्विजेरितैः ॥ २३ ॥
स्नापयित्वा भद्रपीठे कर्णिकायां प्रपूजयेत् ।
पञ्चभिर्दशभिर्वापि षोडशैरुपचारकैः ॥ २४ ॥

१. ग स्वप्नेऽपि
२. क वनमन्दिराम्
३. ग राजसुता
४. घ दुःखशोकभयाकुला
५. घ नित्यं दासीशताकीर्णा देवयानीं तु सेवते
६. ग महारण्ये
७. घ रुदन्ती
८. घ सा तं
९. क सुभगाभिः
१०. क दीपोपकारकैः
११. ग सुचिन्त्रितम्
१२. ग विचित्रितैः
१३. घ पौरुषेण च सूक्तेन
१४. ग विधिवन् मन्त्रसंज्ञितैः

पाद्यमध्वश्रमहरं शीतलं [1]सुमनोहरम् ।
परमानन्द[2]जनकं गृहाण [3]परमेश्वर ॥ २५ ॥

दूर्वाचन्दनगन्धाढ्यमर्घ्यं युक्तं प्रयत्नतः ।
गृहाण रुक्मिणीनाथ प्रसन्नस्य [4]मम प्रभो ॥ २६ ॥

नानातीर्थोद्भवं वारि सुगन्धि सुमनोहरम् ।
गृहाणाचमनीयं त्वं [5]जगन्नाथ श्रिया सह ॥ २७ ॥

नानाकुसुमगन्धाढ्यं सूत्र[6]ग्रथितमुत्तमम् ।
वक्षःशोभाकरं चारु माल्यं [7]गृहाण मे प्रभो ॥ २८ ॥

तन्तुसन्तानसन्धानरचितं [8]बन्धनं हरे ।
गृहाणावरणं शुद्धं निरावरण [9]सप्रिय ॥ २९ ॥

यज्ञसूत्रमिदं देव प्रजापतिविनिर्मितम् ।
गृहाण वासुदेव [10]त्वं रुक्मिण्या रमया सह ॥ ३० ॥

[11]मणिरत्नसमाकीर्णं स्वर्णमुक्ताविघट्टितम् ।
प्रियया सह देवेश गृहाणाभरणं मम ॥ ३१ ॥

दधिक्षीरगुडान्नादिपूप[12]मिष्टान्नखण्डकान् ।
[13]गृहाण रुक्मिणीनाथ सनाथं कुरु मां प्रभो ॥ ३२ ॥

कर्पूरागुरुगन्धाढ्यं [14]परमानन्ददायकम् ।
धूपं गृहाण [15]मे कान्त वैदर्भ्या प्रियया सह ॥ ३३ ॥

---

१. ग शुभलक्षणम् २. ग दायकं
३. ग मम केशव ४. ग ममानघ
५. घ श्रीनिवास ६. ग प्रथित
७. घ नय सुरेश्वर ८. क वसनम्
९. ग ईश्वर १०. घ खं
११. घ नानारत्नसमायुक्तं १२. घ लड्डुक
१३. क गृहाण नाथनैवेद्यं रुक्मिण्या सह साम्प्रतम् १४. ग दिगामोदविधायकम्
१५. घ वरद



भक्तानां [1]गृहमग्नानां संसारध्वान्तनाशनम् ।
दीपमालोकय [2]प्रभो [3]जगदालोकनादर ॥ ३४ ॥

श्यामसुन्दर पद्माक्ष [4]गोलोकेश्वर श्रीहरे ।
प्रपन्नं पाहि देवेश रुक्मिण्या [5]सहिताच्युत ॥ ३५ ॥

इति तासां व्रतं दृष्ट्वा मुनिं नत्वा सुदुःखिता ।
शर्मिष्ठा [6]दीनमलिना कृताञ्जलिरुवाच ताः ॥ ३६ ॥

## शर्मिष्ठोवाच

राजपुत्रीं दुर्भगां [7]च [8]शोकेनातिनिपीडिताम् ।
त्रातुमर्हथ [9]मां देव्यो व्रतेनानेन कर्मणा ॥ ३७ ॥

श्रुत्वा तु ता वचस्तस्याः [10]कारुण्याच्च कियत् कियत् ।
पूजोपकरणं दत्त्वा कारयामासुः [11]सुन्दरम् ॥ ३८ ॥

व्रतं कृत्वा तु शर्मिष्ठा लब्ध्वा स्वामिन[12]मादरात् ।
सूत्वा [13]पुत्रान् सुसन्तुष्टा [14]सा चाभूत् स्थिरयौवना ॥ ३९ ॥

सीता चाशोकवनिकामध्ये सरमया सह ।
व्रतं कृत्वा पतिं लेभे रामं [15]राक्षसनाशनम् ॥ ४० ॥

बृहदश्वप्रसादेन कृत्वेमं द्रौपदी व्रतम् ।
पतियुक्ता दुःखमुक्ता बभूव [16]स्थिरयौवना ॥ ४१ ॥

तथा रमा सिते पक्षे वैशाखे द्वादशीदिने ।
जामदग्न्याद् व्रतं चक्रे पूर्णं वर्षचतुष्टयम् ॥ ४२ ॥

---

१. घ गेहशक्तानां २. घ विभो
३. ग जगदालोतत्पर ४. घ पीताम्बर चतुर्भुज
५. क सह माधव ६. घ मिष्टवचना
७. ग घ मां ८. घ स्वामिना परिवर्जिताम्
९. ग घ हे १०. क रुक्मिणीं च
११. घ आदरात् १२. घ ईश्वरम्
१३. क पुत्रत्रयं तुष्टा १४. घ समभूत्
१५. ग नयनाभिरामम् १६. ग सुखमण्डिता

पट्टसूत्रं करे बद्ध्वा भोजयित्वा [1]द्विजान् बहून्।
भुक्त्वा हविष्यं [2]क्षीरं सुमिष्टं च स्वामिना सह ॥ ४३ ॥

बुभुजे पृथिवीं [3]कृत्स्नां लेभे च विपुलं सुखम्।
[4]काले च सुषुवे पुत्रौ मेघमालबलाहकौ ॥ ४४ ॥

देवानामुपकर्त्तारौ यज्ञदानतपोव्रतैः।
महोत्साहौ महावीर्यौ सुभगौ कल्किसम्मतौ ॥ ४५ ॥

[5]व्रतवरमिति कृत्वा सर्वसम्पत्समृद्धया
भवति विदिततत्त्वा पूजिता पूर्णकामा।
हरिचरणसरोजद्वन्द्वभक्त्यैकतानां
व्रजति गतिमपूर्वां ब्रह्मविज्ञै[6]रगम्याम् ॥ ४६ ॥

[7]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
[8]रमारुक्मिणीव्रतं [9]नाम एकत्रिंशोऽध्यायः[10]।

१. क द्विजोत्तमान्
२. घ क्षीराक्तं सुपुष्टं
३. घ सर्वामपूर्वां स्वजनैर्वृता
४. घ सा पुत्रौ सुषुवे साध्वी
५. व्रतवरमभिकृत्वा
६. क अपूर्वाम्
७. क × इति श्री
८. घ × रमा
९. ग × नाम
१०. ग + समाप्तः

# द्वात्रिंशोऽध्यायः

## सूत उवाच

एतद् वः कथितं [1]सर्वं व्रतं [2]त्रैलोक्यविश्रुतम्।
अतःपरं कल्किकृतं च [3]कार्त्स्न्येन श्रृणुत ॥ १ ॥
शम्भले वसतस्तस्य सहस्रपरिवत्सराः।
व्यतीता भ्रातृपुत्रस्व[4]ज्ञातिसम्बन्धिभिः सह ॥ २ ॥
शम्भले शुशुभे श्रेणी [5]सभापणकचत्वरैः।
[6]पताकाध्वजचित्राढ्यैर्यथेन्द्रस्यामरावती ॥ ३ ॥
यत्राष्टषष्टितीर्थानां सम्भवः शम्भलेऽभवत्।
मृत्योर्मोक्षः क्षितौ कल्केरकल्कस्य पदाश्रयात् ॥ ४ ॥
वनोपवनसन्ताननानाकुसुमसंकुलैः।
[7]शोभितं शम्भलं ग्रामं मन्ये [8]मोक्षपदं भुवि ॥ ५ ॥
तत्र कल्किः पुरस्त्रीणां [9]नयनानन्दवर्धनः।
पद्मया रमया [10]रेमे यथेच्छं जगतीपतिः ॥ ६ ॥
सुराधिपप्रदत्तेन कामगेन [11]विमानेन।
नदीपर्वतकुञ्जेषु [12]द्वीपेषु परया मुदा ॥ ७ ॥

१. घ विप्रा
२. क सुफलदायकम्
३. घ यच्छृणुत द्विजाः
४. ग जाति
५. क सभागणक
६. क ग ध्वजपताकामाल्यैश्च
७. क + सरोभिः सारसैर्हंसैः सरोजैर्भृङ्गनादितैः।
पुरस्त्रीमज्जनामोदजलकल्लोलसंकुलैः।
८. ग मोक्षोपमम्
९. ग नयनानन्दकारणः
१०. घ कामं रराम
११. रथेन वै
१२. क स रेमे

[1]रममाणोऽहर्निशं पद्मारमाभ्यां विलसद्वपुः ।
[2]कार्यमन्यन्न बुबुधे [3]स्त्रैणश्च कामलम्पटः ॥ ८ ॥

पद्मामुखामोद[4]सरोजशीधुवासोपभोगी सुविलासवासः ।
प्रभूतनीलेन्द्रमणिप्रकाशे गुहाविशेषे प्रविवेश कल्किः ॥ ९ ॥

पद्मा तु पद्माशतरूपरूपा रमा च पीयूषकलाविलासा ।
[5]अनुप्रविष्टं गिरिगह्वरे ते नारीसहस्राकुलितेत्वगाताम् ॥ १० ॥

पद्मा पतिं प्रेक्ष्य गुहानिविष्टं रन्तुं मनोज्ञा प्रविवेश पश्चात् ।
[6]रमाबलायूथसमन्विता तत् पश्चाद् गता कल्कि[7]महोग्रकामा ॥ ११ ॥

[8]तत्रेन्द्रनीलोत्पलगह्वरान्ते कान्ताभिरात्मप्रतिमाभिरीशम् ।
कल्किं च दृष्ट्वा नवनीरदाभं [9]तत्र स्थितं [10]पुष्परसावमोहम् ॥ १२ ॥

रमा सखीभिः प्रमदाभिरार्त्ता विलोकयन्ती [11]दिशमाकुला सा ।
पद्मापि पद्माशतशोभमाना विषण्णचित्ता [12]नयने स्मरार्ता ॥ १३ ॥

भूमौ लिखन्ती निजकज्जलेन कल्किं [13]शुकं तं कुचकुङ्कुमेन ।
कस्तूरिकाभिस्तु तदग्रमग्रे निर्माय चालिङ्ग्य ननाम भावात् ॥ १४ ॥

रमा कलालापपरा स्तुवन्ती कामार्दिता तं हृदये [14]निधाय ।
ध्यात्वा निजालङ्करणैः प्रपूज्य [15]तस्थौ विषण्णां करुणावसन्ना ॥ १५ ॥

१. घ रममाणोऽविशत् पद्मारमाद्याभी रमापतिः
२. घ दिवानिशं न
३. क स्त्रैणवत्
४. क मोदसुधासुवासो रमाचलालापविलास-वासः
५. घ प्रति
६. ग रमाबलानामयुतैः समन्विता
७. ग अमोघकामा
८. क दृष्ट्वेन्द्र
९. घ ततः
१०. घ प्रस्तरवन् मुमोद
११. घ दिशमाकुलाक्षो
१२. घ न बभौ स्म चार्ता
१३. हु सत्कुङ्कुमकर्दमेन
१४. ग करोति
१५. क प्रायप्रपन्ना



क्षणात् समुत्थाय रुरोद रामा कलापिनः कण्ठनिभं स्वनाथम् ।
हृदोपगूढं न पुनः [1]प्रलभ्य कामार्दितेत्याह हरे प्रसीद ॥ १६ ॥

पद्मापि निर्मुच्य निजाङ्गभूषाश्चकार [2]धूलीपटले विलासम् ।
कण्ठं च [3]कस्तूरिकपङ्कनीलं कामं निहन्तुं शिवतामुपेत्य ॥ १७ ॥

कलावतीनां कलयाकलय्य क्षीणेक्षणानां हरिरार्तबन्धुः ।
कामप्रपूराय [4]चचार मध्ये कल्किः प्रियाणां [5]रतिमाततान ॥ १८ ॥

ताः सादरेणात्मपतिं मनोज्ञाः करेणवो यूथपतिं यथेयुः ।
सानन्दभावा विषदानुवृत्ता वनेषु [6]वामाः परिपूर्णकामाः ॥ १९ ॥

वैभ्राजके चैत्ररथे सुपुष्पे सुनन्दने मन्दरकन्दरान्ते ।
रेमे स रामाभि[7]रुदारतेजा रथेन [8]भास्करमरीचिकान्तिः ॥ २० ॥

पद्मामुखाब्जामृतपान[9]मत्तो रमासमालिङ्गनवासरङ्गी ।
वराङ्गनानां [10]कुचकुङ्कुमाक्तो रतिप्रसङ्गे विपरीतयुक्तः ।
मुखे विदष्टा रसनावशिष्टामोदः स कल्किर्न हि वेद [11]देहम् ॥ २१ ॥

[12]रमाः समानाः पुरुषोत्तमं तं वक्षोजमध्ये विनिधाय धीराः ।
परस्पराश्लेषणजातहासा रेमुर्मुकुन्दं विलसच्छरीराः ॥ २२ ॥

ततः सरोवरं त्वरा स्त्रियो ययुः [13]क्लमज्वराः ।
प्रियेण [14]तेन कल्किना [15]जलान्तरे विहारिणा ॥

१. क प्रलब्धा
२. क धूलीपटलम्
३. घ कस्तूरिकयापि
४. घ ससार
५. घ सुरतोत्सवाय
६. ग घ रामाः
७. क रुदारचेता
८. घ भास्वत् खगमेन कल्किः
९. क लुब्धो
१०. क नटनप्रसङ्गैः गीतेन कामोत्सवमाह कल्किः
११. क वेदम्
१२. ग पद्मारमा सा
१३. ग कृतज्वराः
१४. ग राज्ञा
१५. घ वनान्तरे

सरः प्रविश्य पद्मया [1]विमोहरूपया तया ।
जलं [2]प्रक्षेपयामासुः करेणवो यथा गजम् ॥ २३ ॥

[3]इति रतिपतिलीलालोकनाथः स कल्किः ।
प्रिययुवतिपरीतः पद्मया रामयाद्यः ।
निजरमणविनोदैः शिक्षयँल्लोकवर्गान् ।
जयति विबुधभर्त्ता शम्भले वासुदेवः ॥ २४ ॥

ये शृण्वन्ति वदन्ति भावचतुरा ध्यायन्ति सन्तः सदा
कल्केः श्रीपुरुषोत्तमस्य चरितं कर्णामृतं सादराः ।
तेषां नो सुखयत्ययं मुररिपोर्दास्याभिलाषं विना
संसारः परिमोचनं च परमानन्दामृताम्भोनिधेः ॥ २५ ॥

[4]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
कल्कि[5]रासवर्णनं [6]नाम द्वात्रिंशोऽध्यायः ।[7]

१. क जगद्विमोहरूपया
२. घ ददुर्वराङ्गनाः
३. घ इति ह युवतिलीला
४. क × इति श्री
५. घ × रास
६. ग × नाम
७. ग + समाप्तः

# त्रयस्त्रिंशोऽध्यायः

## सूत उवाच

ततो [1]देवादयः सर्वे [2]यानमारुह्य सत्वरम् ।
स्वैः स्वैर्गणैः परिवृताः कल्किं द्रष्टुमुपाययुः ॥ १ ॥

महर्षयः सगन्धर्वाः किन्नराश्चाप्सरोगणाः ।
समाजग्मुः [3]प्रसन्नाश्च शम्भलं [4]मुनिपूजितम् ॥ २ ॥

तत्र गत्वा सभामध्ये कल्किं [5]देवं जगत्पतिम् ।
तेजोनिधिं [6]प्रपन्नानां जनानां [7]भयहारकम् ॥ ३ ॥

नीलजीमूतसंकाशं दीर्घपीवरबाहुकम् ।
किरीटेनार्कवर्णेन स्थिरविद्युन्निभेन [8]तम् ॥ ४ ॥

शोभमानं द्युमणिना कुण्डले[9]नातिशोभिना ।
सहर्षालाप[10]विकसद् वदनं स्मितशोभिनम् ॥ ५ ॥

कृपाकटाक्षविक्षेपपरिक्षिप्तविपक्षकम् ।
तारहारोल्लसद्वक्षश्चन्द्रकान्तमणिश्रिया ॥ ६ ॥

कुमुद्वतीमोदवहं स्फुरच्छक्रायुधाम्बरम् ।
[11]सर्वदानन्दसन्दोहरसोल्लसितविग्रहम् ॥ ७ ॥

१. घ देवगणाः
२. घ ब्रह्मणा सहिता रथैः
३. घ प्रमुदिता
४. घ सुरपूजितम्
५. घ कमललोचनम्
६. क प्रसन्नानां
७. घ अभयप्रदम्
८. क तु
९. घ नाभिशोभिना
१०. क विलसद्
११. क जगदानन्द

## [1]देवा ऊचुः

[2]जयाशेषसंक्लेशकक्षप्रकीर्णानलोद्दामसं[3]कीर्णहीश [4]देवेश विश्वेश भूतेश भावः। [5]तवानन्त चान्तःस्थितोऽङ्गाप्तरत्नप्रभाभातपादाजिता-नन्तशक्ते प्रकाशीकृताशेषलोकत्र[6]यात्र वक्षःस्थले भास्वत्कौस्तुभश्याम-मेघौघराजच्छरीरद्विजाधीशपुञ्जानन त्राहि विष्णो सदाराः वयं त्वां प्रपन्नाः सशेषाः।

[7]यद्यस्त्यनुग्रहोऽ[8]स्मासु व्रज वैकुण्ठमीश्वर।
[9]परित्यज्य धराधारं सत्यधर्माविरोधतः॥ ८॥

कल्किस्तेषामिति वचः श्रुत्वा [10]हर्षमवाप सः।
पात्रमित्रैः परिवृतश्चकार गमने [11]मतिम्॥ ९॥

पुत्रानाहूय चतुरो महाबलपराक्रमान्।
[12]राज्ये निक्षिप्य सहसा धर्मिष्ठान् [13]प्रकृतिप्रियान्॥ १०॥

ततः प्रजाः समाहूय कथयित्वा [14]निजाः कथाः।
[15]धराधामपरित्यागं स्फुटमाह जगद्गुरुः॥ ११॥

---

१. घ + नानामणिगणोद्योतदीपितं रूपमद्भुतम्।
ददृशुर्देवगन्धर्वा ये चान्ये समुपागताः।
भक्त्या परमया युक्ताः परमानन्दविग्रहम्।
कल्किं कमलपत्राक्षं तुष्टुवुः परमादरात्।

२. क जयाशेषसंक्लेशसंसारकक्ष ३. क संकीर्त्तन श्री

४. क सदेवेश भूतेश भावस्तवान्तः ५. क + बिनम्रं समस्तस्थितो दीप्तरत्नः प्रभाभापादाब्जजितानन्तशक्तिः

६. क लोकत्रयोत्तुङ्गवक्षस्थलात् पात् सकौस्तुभेन

७. क × यद्य……विरोधतः ८. घ अस्माकं

९. घ त्यक्त्वा शासितभूखण्डं १०. घ परमहर्षितः

११. क रतिम् १२. ग राज्यं विभज्य

१३. ग प्रजारञ्जकान् १४. क प्रियाः

१४. घ प्राह तान् निजनिर्याणं देवानामुपरोधतः



[1]तच्छ्रुत्वा ताः प्रजाः सर्वा रुरुदुः [2]खिन्नमानसाः।
तं [3]प्राहुरात्मनां प्रियं स्वपितरं यथा सुताः॥ १२॥

## प्रजा ऊचुः

भो नाथ सर्वधर्मज्ञ नास्मान् त्यक्तुमिहार्हसि।
यत्र त्वं तत्र तु वयं यामः प्रणतवत्सल॥ १३॥

[4]दारा गृहा धनान्यत्र [5]प्रिया पुत्रास्तवानुगाः।
परत्रेह विशोकाय ज्ञात्वा [6]त्वामादिपूरुषम्॥ १४॥

इति [7]श्रुत्वा तु वचनं सान्त्वयित्वा सदुक्तिभिः।
प्रययौ [8]दीनमनसा पत्नीभ्यां [9]सुमहद् वनम्॥ १५॥

हिमालयं मुनिगणैराकीर्णं जाह्नवीजलैः।
परिपूर्णं देवगणैः सेवितं [10]योगिभिस्तथा॥ १६॥

गत्वा विष्णुः सुरगणैर्वृतश्चारुचतुर्भुजः।
उषित्वा जाह्नवीतीरे [11]लेभे च परमां गतिम्॥ १७॥

पूर्णज्योतिर्मयः साक्षी परमात्मा [12]सनातनः।
बभौ सूर्यसहस्राणां तेजोराशि[13]समद्युतिः॥ १८॥

शङ्खचक्रगदापद्मशार्ङ्गाद्यैः समभिष्टुतः।
नानालङ्करणानां च समलङ्करणाकृतिः॥ १९॥

---

१. क कल्किस्तेषामितिवचः श्रुत्वा परमहर्षितः

२. घ विस्मयान्विताः ३. घ प्रणताः पुत्रा यथा पितरमीश्वरम्

४. घ प्रिया ५. घ पुत्राः प्राणा

६. घ त्वां यज्ञपूरुषम् ७. घ तद्वचनं

८. घ क्लिन्नहृदयः ९. घ सहितो

१०. घ मनसः प्रियम् ११. घ सस्मारात्मनमात्मना

१२. घ पुरातनः १३. क गुणात्मजा

[1]ववृषुस्तं सुराः पुष्पैः कौस्तुभानुक्तकन्धरम् ।
सुगन्धिकुसुमासारैर्देवदुन्दुभिनिःस्वनैः ॥ २० ॥

तुष्टुवुर्मुहुर्मुहुः सर्वे लोकाः [2]स्थावरजङ्गमाः ।
दृष्ट्वा रूपम[3]रूपस्य [4]प्रयाणे वैष्णवं पदम् ॥ २१ ॥

तद् दृष्ट्वा महदाश्चर्यं पत्युः कल्केर्महात्मनः ।
रमा पद्मा च [5]ज्वलनं प्रविश्य तमवापतुः ॥ २२ ॥

धर्मः कृतयुगं [6]नाम ततोऽस्मिन् पृथिवीतले ।
निःसपत्नौ च [7]सुखिनौ भूलोकं चेरतु[8]स्तथा ॥ २३ ॥

देवापिश्च मरुः कामं कल्केरादेशकारिणौ ।
प्रजाः [9]सम्यक् पालयन्तौ भुवं जुगुपतुः [10]पृथक् ॥ २४ ॥

विशाखयूपभूपालः कल्केर्निर्माण[11]मीदृशम् ।
श्रुत्वा स्वपुत्रं विषये [12]अभिषिच्य गतो वनम् ॥ २५ ॥

अन्ये [13]तु पृथिवीपालाः कल्केर्विरह[14]कातराः ।
तं ध्यायन्तो [15]स्मरन्तश्च विरक्ताः स्युर्नृपासने ॥ २६ ॥

[16]तथा कल्केरनन्तस्य कथां भुवनपावनीम् ।
[17]निवेद्य च शुकः प्रायान् नरनारायणाश्रमम् ॥ २७ ॥

---

१. क ववर्षुस्तं
२. घ सस्थाणु
३. ग भगवतः
४. घ निर्याणे
५. घ दहनं
६. ग घ कल्केराज्ञया
७. घ सुसुखिनौ
८. ग घ चिरम्
९. ग घ संपालयन्तौ तु
१०. घ प्रभू
११. क अद्भुतम्
१२. घ नृपं कृत्वा
१३. घ नृपतयो ये च
१४. घ कर्मिताः
१५. घ जपन्तश्च
१६. घ इति
१७. घ कथयित्वा



[1]मार्कण्डेयादयो ये च मुनयो [2]ह्यूर्ध्वरेतसः ।
[3]श्रुत्वानुभावं कल्केस्ते तं [4]गायन्तो जगुर्यशः ॥ २८ ॥
यस्यानुशासनाद् भूमौ [5]प्रजा धर्महिते रताः ।
नाल्पायुषो दरिद्राश्च न पाषण्डा न [6]वञ्चकाः ॥ २९ ॥
[7]नाधयो व्याधयः क्लेशा देवभूतात्मसम्भवाः ।
निर्मत्सराः सदानन्दा बभूवु[8]र्जीवजातयः ॥ ३० ॥
इत्येतत्कथितं कल्केरवतारं [9]महोद्भवम् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ ३१ ॥
[10]शोकसन्तापपापघ्नं [11]कलिव्यालविनाशनम् ।
सुखदं मोक्षदं लोके वाञ्छितार्थफलप्रदम् ॥ ३२ ॥
तावच्छास्त्रप्रदीपानां प्रकाशो [12]भुवि रोचते ।
भाति भानुः पुराणाख्यो [13]यावल्लोकेऽतिकामधुक् ॥ ३३ ॥
श्रुत्वैतद् भृगुवंशजो मुनिगणैः साकं [14]सहर्षो वशी
[15]ज्ञात्वा सूतममेयबोधविदितं श्रीलोमहर्षात्मजम् ।
[16]श्रीकल्केरवतारसारममलं भक्तिप्रदं श्रीहरेः
शुश्रूषुः पुनराह साधुवचसा गङ्गास्तवं सत्कृतः ॥ ३४ ॥

[17]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
कल्कि[18]निर्याणं [19]नाम त्रयस्त्रिंशोऽध्यायः[20] ।

---

१. क सनकसनन्दादयो
२. घ प्रसमायनाः
३. क श्रुत्वावतारं
४. ग घ ध्यायन्तो
५. घ नाधर्मिष्ठाः प्रजाजनाः
६. घ हैतुकाः
७. क आधिव्याधिर्गतस्तस्मात्
८. क ग जारजातयः
९. घ महोदयम्
१०. क + तदेतत् कथितं कल्केरवतारं महोदयम् ।
सुधन्यं पावकं शुद्धं पृथिव्यां मोक्षदं नृणाम् ।
११. घ कलिव्याकुलनाशनम्
१२. क भूविरोचने
१३. क यावन्नोदेति
१४. क महर्षेर्वचः
१५. क संश्रुत्यामृतमप्रमेयविदितं
१६. घ श्रीकल्केस्त्ववतारवाक्यममलम्
१७. क × इति श्री
१८. घ निर्याणो
१९. ग × नाम
२०. ग + समाप्तः

# चतुस्त्रिंशोऽध्यायः

**शौनक उवाच**

हे सूत [1]सर्वधर्मज्ञ यत् त्वया कथितं पुरा।
गङ्गां स्तुत्वा समायाता मुनयः कल्किसन्निधिम् ॥ १ ॥
स्तवं तं वद गङ्गायाः सर्वपापप्रणाशनम्।
मोक्षदा [2]पुण्यदा लोके गङ्गा गगनमेखला ॥ २ ॥

**सूत उवाच**

शृणुध्वमृषयः सर्वे गङ्गास्तवमनुत्तमम्।
शोकमोहहरं पुंसां [3]देवर्षिपरिकीर्त्तितम् ॥ ३ ॥

**ऋषय ऊचुः**

इयं सुरतरङ्गिणी भवनवारिधेस्तारिणी
[4]स्तुता हरिपदाम्बुजादुपगता जगत् संसदः।
सुमेरुशिखरामरप्रियजला मलक्षालनी
[5]प्रसन्नवदना शुभा [6]भवभयस्य विद्राविणी ॥ ४ ॥
भगीरथमथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका सिता।
सुरासुरनरोरगैरजभवाच्युतैः संस्तुता
विमुक्तिफलशालिनी [7]कलुषनाशिनी राजते ॥ ५ ॥

---

१. क ग सर्वमर्मज्ञ
२. घ शुभदं भक्त्या शृण्वतां पठतामिह
३. घ ऋषिभिः
४. क मुदा
५. क प्रसन्नाननसौरभा
६. ग भूत
७. क हरिमालिनी



पितामहकमण्डलुप्रभवमुक्तिबीजालता
श्रुतिस्मृतिगणस्तुता द्विजकुलालबालावृता।
[1]सुमेरुशिखराभिदा निपतिता त्रिलोकावृता
सुधर्मफलशालिनी सुखपलाशिनी राजते ॥ ६ ॥

[2]नदत्पतङ्गमालिनी सगरवंशमुक्तिप्रदा
मुनीन्द्रवरनन्दिनी दिवि मता च मन्दाकिनी।
सदा दुरितनाशिनी [3]विमलवारिसंदर्शन-
प्रणामगुणकीर्त्तनादिषु जगत्सु संराजते ॥ ७ ॥

महाभिधसुताङ्गना हिमगिरीशकूटस्तनी
सफेनजलहासिनी सितमरालसंचारिणी।
चलल्लहरिसत्करा वरसरोजमालाधरा
रसोल्लसितगामिनी जलधि[4]कामिनी राजते ॥ ८ ॥

क्वचित् कलकलस्वना क्वचिदधीरयादोगणा
क्वचिद् मुनिगणैः स्तुता क्वचिदनन्तसम्पूजिता।
क्वचिद् रविकरोज्ज्वला क्वचिदुदग्रपाताकुला
क्वचिज्जनविगाहिता जयति भीष्ममाता [5]वरा ॥ ९ ॥

स एव [6]कुशलो जनः प्रणमतीह भागीरथीं
स एव [7]तपसां निधिर्जपति जाह्नवीमादरात्।
स एव पुरुषोत्तमः स्मरति [8]यस्तु मन्दाकिनीं
स एव विजयी प्रभुः सुरतरङ्गिणीं सेवते ॥ १० ॥

---

१. क सुमेरुशिरसन्निधा
२. घ चरद्विहगमालिनी
३. क स्नपनपानसंदर्शन
४. क भामिनी
५. घ सती
६. ग कुशली
७. ग तपसो
८. घ साधु

तवामलजलाचितं खगश्वृगालमीनक्षतं
चलल्लहरिलोलितं रुचिरतीर[1]समाश्रितम् ।
कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽ-
प्यहं त्रिपथगामिनि प्रियमतीव [2]पश्यामहे ॥ ११ ॥
त्वत्तीरे वसति तवामलजलस्नानं तव [3]दर्शनं
त्वन्नामस्मरणं तवोदयकथासंलापनं [4]पावनम् ।
[5]गङ्गे मे तव सेवनैकनिपुणोऽप्यानन्दितश्चादृतो
[6]नत्वा [7]त्वद्गतपातको भुवि कदा शान्तश्चरिष्याम्यहम् ॥ १२ ॥
इत्येतदृषिभिः प्रोक्तं [8]गङ्गायाः स्तवमुत्तमम् ।
स्वर्ग्यं यशस्यमायुष्यं [9]श्रवणाल्लभ्यते ध्रुवम् ॥ १३ ॥
[10]हरति सकलपापं बलमायुश्च यच्छति ।
[11]सन्ध्यात्रयमुपासीत गङ्गासन्निधावेव हि ॥ १४ ॥
[12]इत्येतद् भार्गवाख्यानं [13]शुकमुखाच्छ्रुतं मया ।
पठितं श्रावितं चात्र [14]पुण्यं धन्यं यशस्करम् ॥ १५ ॥
अवतारं महाविष्णोः [15]कल्केश्च परमद्भुतम् ।
पठतां शृण्वतां भक्त्या [16]सर्वाशुभविनाशनम् ॥ १६ ॥

[17]इति श्रीकल्किपुराणेऽनुभागवते भविष्ये
गङ्गास्तवो [18]नाम चतुस्त्रिंशोऽध्यायः ।[19]

१. घ जम्बालितम्
२. घ पश्यामो वा
३. घ प्रेक्षणं
४. ग पवित्रं
५. क गन्तुं त्वत्तट
६. घ स्तुत्वा
७. क त्वत्सेवागतपातको
८. घ गङ्गास्तवमनुत्तमम्
९. घ पठनाच्छ्रवणादपि
१०. घ सर्वपापहरं पुंसां बलमायुर्विवर्द्धनम्
११. घ प्रातर्मध्याह्नसायाह्ने गङ्गासान्निध्यात् भवेत्
१२. एतदेव भृगोर्वाक्यं
१३. घ शुकदेवान् मया श्रुतम्
१४. ग शुभं
१५. घ कल्केः परममद्भुतम्
१६. ग सर्वशान्तिविधायकम्
१७. क × इति श्री
१८. ग × नाम
१९. ग + समाप्तः

# पञ्चत्रिंशोऽध्यायः

अत्रापि शुकसंवादो मार्कण्डेयेन [1]धीमता ।
अधर्मवंशकथनं [2]कलेश्च वर्णनं ततः ॥ १ ॥
देवानां ब्रह्मसदनप्रयाणं [3]पृथिव्या सह ।
[4]ब्रह्मवाक्याद् विष्णोश्च जन्म विष्णुयशोगृहे ॥ २ ॥
सुमत्यां स्वांशकैर्भ्रातृचतुर्भिः शम्भले [5]पुरे ।
पितुः पुत्रेण [6]संवादस्तथोपनयनं हरेः ॥ ३ ॥
पुत्रेण सह संवासो वेदाध्ययनमुत्तमम् ।
[7]शास्त्रास्त्राणां परिज्ञानं शिवसंदर्शनं ततः ॥ ४ ॥
कल्केः स्तवं [8]शिवपुरे वरलाभः [9]शुकात् पुनः ।
शम्भलागमनं [10]चक्रे ज्ञातिभ्यो वरकीर्त्तनम् ॥ ५ ॥
विशाखयूपभूपेन [11]आत्मनः सर्ववर्णनम् ।
[12]महाभाग्याद् ब्राह्मणानां [13]शुकागमनं तत्र च ॥ ६ ॥
[14]कल्किना शुकसंवादः सिंहलाख्यानमुत्तमम् ।
शिवदत्तवरा पद्मा तस्या भूपस्वयं वरे ॥ ७ ॥
दर्शनाद् [15]नृपसङ्घानां स्त्रीभावपरिकीर्त्तनम् ।
[16]तथास्या विषादः कल्केर्विवाहार्थं समुद्यमः ॥ ८ ॥

१. ग धीमता
२. घ कलेर्विवरणं
३. घ गोभुवा
४. घ ब्रह्मणो वचनाद् विष्णोर्जन्म
५. क पुरा
६. क सम्वादो वेदाध्ययनमुत्तमम्
७. क शस्त्रास्त्राणां
८. घ शिवालये
९. घ शुकापनम्
१०. ग यत्र
११. घ निजसर्वात्मवर्णनम्
१२. ग ब्राह्मणानां महाभाग्यात्
१३. घ शुकस्यागमनं ततः
१४. ग शुकेन कल्केरालापः
१५. घ भूप
१६. घ तस्या विषादः कल्केस्तु

[1]शुकस्य प्रेरणं दौत्ये तया तस्यापि दर्शनम् ।
शुकपद्मापरिचयः श्रीविष्णोः पूजनादिकम् ॥ ९ ॥
[2]स्मरणं मननं ध्यानं सर्वं तत् [3]परिवर्णितम् ।
[4]शुकाय भूषणं दानं पुनः शुकसमागमः ॥ १० ॥
कल्केः पद्माविवाहार्थं गमनं [5]सम्मतिस्तयोः ।
जलक्रीडाप्रसङ्गेन विवाहस्तदनन्तरम् ॥ ११ ॥
पुंस्त्वप्राप्तिश्च भूपानां कल्केर्दर्शनमात्रतः ।
[6]अनन्तस्यागमनं तत्र राज्ञः संवादस्तेन च ॥ १२ ॥
षण्डत्वादात्मनो जन्म कर्म [7]तत्र शिवस्तवः ।
मृते पितरि तद्विष्णोः क्षेत्रे माया[8]प्रदर्शनम् ॥ १३ ॥
[9]अत्राख्यानमनन्तस्य ज्ञानवैराग्यवैभवम् ।
राज्ञां प्रयाणं कल्केश्च पद्मया सह शम्भले ॥ १४ ॥
विश्वकर्मविधानं च [10]वसतिश्च सुखाश्रया ।
ज्ञातिभ्रातृसुहृत्पुत्रैः सेनाभि[11]र्बुद्धनिग्रहः ॥ १५ ॥
कथितश्चात्र तेषां च स्त्रीणां [12]रणं महाघोरम् ।
ततोऽत्र [13]बालखिल्यानां मुनीनां [14]स्वनिवेदनम् ॥ १६ ॥
सपुत्रायाः कुथोदर्या वधश्चात्र [15]प्रकीर्त्तितः ।
हरिद्वारगतस्यापि कल्केर्मुनिसमागमः ॥ १७ ॥

१. घ शुकप्रस्थापनं
२. घ पादादिदेहध्यानं च केशान्तं
३. क परिकीर्त्तितम्
४. घ शुकभूषणदानं च
५. घ दर्शनं तयोः
६. घ अनन्तागमनं राज्ञा संवादस्तेन संसदि
७. घ चात्र
८. क समागमः
९. ग तत्रानन्ताख्यानं पूतं
१०. घ वसतिः पद्मया सह
११. बौद्धनिग्रहम्
१२. घ संयोधनाश्रयः
१३. शान्ततपसां
१४. क आत्मनिवेदनम्
१५. ग निवेदितः



[1]सूर्यवंशसमाख्यानं सोमस्य च विधानतः ।
श्रीरामचरितं [2]तत्र सर्वपापभयापहम् ॥ १८ ॥
देवापेश्च मरोः सङ्गो [3]युद्धयात्रा प्रकीर्तिता ।
[4]महाघोराहवे कोकविकोकविनिपातनम् ॥ १९ ॥
भल्लाटगमनं तत्र [5]शय्याकर्णादिभिः सह ।
युद्धं शशिध्वजेनात्र सुशान्ताभक्तिकीर्त्तनम् ॥ २० ॥
युद्धे कल्के[6]रागमनं धर्मस्य च कृतस्य च ।
सुशान्तायाः स्तवस्तत्र रमोद्वाहस्तु कल्किना ॥ २१ ॥
सभायां पूर्वकथनं निजगृध्रत्वकारणम् ।
मोक्षः शशिध्वजस्यात्र भक्तिप्रार्थयितुर्विभोः ॥ २२ ॥
[7]विषकन्याया मुक्तिश्च नृपाणामभिषेचनम् ।
मायास्तवः [8]शम्भलेषु नानायज्ञादिसाधनम् ॥ २३ ॥
[9]विष्णुयशसो मोक्षश्च नारदेन प्रकीर्त्तितः ।
कृतधर्मप्रवृत्तिश्च रुक्मिणीव्रतकीर्त्तनम् ॥ २४ ॥
ततो [10]विहारः कल्केश्च पुत्रपौत्रादिसम्भवः ।
कथितो देवगन्धर्वगणागमन[11]मत्र हि ॥ २५ ॥
[12]ततो [13]वैकुण्ठगमनं विष्णोः कल्के[14]रिहोदितम् ।
शुकप्रस्थानं [15]तत्र च कथयित्वा कथाः शुभाः ॥ २६ ॥

१. घ सूर्यवंशस्य कथनं
२. घ चारु सूर्यवंशानुवर्णने
३. क युद्धोद्यमः प्रकीर्त्तितः
४. क महाघोररणे
५. ग शय्याकर्णैः जनैः सह
६. घ आनयनं
७. घ विषकन्यामोचनं च
८. तत्रैव च
९. घ नारदाद् विष्णुयशसो मोक्षश्चात्र
१०. क विवाहः
११. क शम्भले
१२. ग × ततो
१३. ग वैकुण्ठे
१४. ग + नाम
१५. घ उचितं

गङ्गास्तोत्रमिह प्रोक्तं [1]सिद्धिवृद्धिविधायकम्।
जगतामानन्दकरं [2]भुवि पुण्यकरं नृणाम्॥ २७॥

सकलसिद्धिदं [3]श्लोकैः षट्सहस्रं शताधिकम्।
सर्वशास्त्रार्थतत्त्वानां सारं श्रुतिमनोहरम्॥ २८॥

[4]धर्मार्थकाममोक्षाणां तत्त्वं कल्किपुराणं हि।
प्रलयान्ते हरिमुखान्निःसृतं लोकविस्तृतम्॥ २९॥

[5]व्यासेन मुनिना प्रोक्तं द्विजरूपेण भूतले।
विष्णोः कल्केर्भगवतो [6]माहात्म्यं परमाद्भुतम्॥ ३०॥

[7]प्रीत्या च पुराणसारममलं श्रीविष्णुभावाप्लुतं
शृण्वन्तीह वदन्ति साधुसदसि क्षेत्रे सुतीर्थाश्रमे।
दत्त्वा गां तुरगं गजं [8]मदभरं स्वर्णं द्विजायादराद्
वस्त्रालङ्करणैः प्रपूज्य विधिवन् [9]मुक्तास्त एवोत्तमाः॥ ३१॥

श्रुत्वा विधानं [10]विधिना ब्राह्मणो वेदपारगः।
क्षत्रियो भूपतिर्वैश्यो धनी शूद्रो महान् भवेत्॥ ३२॥

पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम्।
विद्यार्थी लभते विद्यां पठनाच्छ्रवणादपि॥ ३३॥

इत्येतत् पुण्यमाख्यानं लोमहर्षणजो मुनिः।
श्रावयित्वा मुनीन् भक्त्या ययौ [11]तीर्थाटनादृतः॥ ३४॥

---

१. घ पुराणे मुनिसम्मतम्
२. घ पुराणं पञ्चलक्षणम्
३. घ लोकैः
४. घ चतुर्वर्गप्रदं कल्किपुराणं परिकीर्त्तितम्
५. घ अहो व्यासेन कथितं
६. घ प्रभावं
७. घ भक्त्यात्र
८. घ गजवरं
९. क मुक्ता भवन्त्युत्तमाः
१०. ग घ विधिवत्
११. ग तीर्थविचारणे



शौनको मुनिभिः सार्द्धं सूतमामन्त्र्य धर्मवित्।
पुण्यारण्ये हरिं ध्यात्वा ब्रह्म प्राप [1]स योगवित्॥ ३५॥

लोमहर्षणजं सर्वं [2]पुराणकथनव्रतम्।
व्यासशिष्यं मुनिवरं तं [3]सूतं प्रणमाम्यहम्॥ ३६॥

आलोक्य सर्वशास्त्राणि [4]विचार्यातिमधिया पुनः।
[5]इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा॥ ३७॥

वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥ ३८॥

सजलजलददेहो वातवेगैकवाहः
करधृतकरवालः सर्वलोकैकपालः।
[6]कलिकुलवनहन्ता सत्यधर्मप्रणेता
कलयतु कुशलं वः कल्किरूपः स भूपः॥ ३९॥

[7]इति श्रीकल्किपुराणेऽनुभागवते भविष्येऽनुक्रमवर्णनं
[8]नाम पञ्चत्रिंशोऽध्यायः[9]।

---

१. घ सहर्षिभिः
२. घ पुराणं यतव्रतम्
३. ग गुरुं
४. घ विचार्य च पुनः
५. ग वैकुण्ठनिवासी तत्र
६. क कलिकुलविनिहन्ता
७. क × इति श्री
८. ग × नाम
९. ग + समाप्तः

क + अज्ञानाद् विस्मृतेर्भ्रान्त्या यन्नूनमधिकं कृतम्।
विपरीतं तु तत् सर्वं क्षमस्व परमेश्वर।

[1] संवत् १८९५ शाके १७९० मीति पौष सुदि १४ शनिवासरे लिपीकृतमिदं पुस्तकं शुभं भूयात् माङ्गल्यं दद्यात् श्रीकृष्णाय नमः।

ग + समाप्तश्चायं ग्रन्थः। श्री हरये नमः :

# कल्किपुराणम्

## समीक्षणम्

अष्टादशमहापुराणवदुपपुराणानामपि प्रामाण्यं प्राचीनत्वं चाकामेनापि स्वीकर्तव्यम्। सर्वेष्वेव महापुराणेष्वेषामुल्लेखः परिचयः प्रसङ्गश्च उपलभ्यते। किन्तु इमानि, महापुराणानि इव न सम्मानमर्हन्ति, महापुराणप्रभावातिशयात्। भारतीये जनसमाजे च पुराणपदेन महापुराणस्यैव स्वीकारादुपपुराणानां नैतादृश आदरः। महापुराणमतानुसारेण उपपुराणानि तेषामुपभेदा एव न स्वातन्त्र्यमर्हन्ति इति न वस्तुस्थितिः। स्वतन्त्ररूपेणैषां स्थितिः सर्वैरेव स्वीक्रियते। बहुनिबन्धकारैः एभ्यो विभिन्नानामंशानां नाम्ना उद्धृतिः, पृथिव्यां बहुषु स्थानेषु मातृकामग्नानामेषां स्वातन्त्र्येणावस्थानमित्यादिभिः उपपुराणानि महत्त्वं प्रमाणपदवीं च भजन्ते।

महापुराणानां संख्याविषये नामविषये च प्रायशः सर्वेषामेवैकमत्यमस्ति किन्तु न तथोपपुराणविषये। यद्यपि कूर्मस्कन्दपद्मगरुडब्रह्मवैवर्तादिमहापुराणेषु अन्येषु निबन्धेषु च महापुराणवदुपपुराणसंख्या अष्टादश एव स्वीकृता तथापि,

अन्याश्च संहिताः सर्वा मारीचकापिलादयः।
सर्वत्र धर्मकथने तुल्यसामर्थ्यमुच्यते।

इत्याद्युक्तिभिरष्टादशातिरिक्तानां विशिष्टानामुपपुराणानां प्रामाण्यमप्यभ्युपगम्यते। अथोपपुराणानां नामानि सर्वत्र भिन्नरूपाणि। वस्तुतस्तु तान्यसंख्यानि इत्येव मन्तव्यम्।

शैवब्राह्मशाक्तवैष्णवेत्यादिभिर्यथा महापुराणानि भिद्यन्ते तथा उपपुराणेष्वप्ययं भेदः संभवति। वैष्णवान्युपपुराणानि यथा—

विष्णुधर्मम्, विष्णुधर्मोत्तरपुराणम्, नरसिंहपुराणम्, क्रियायोगसारपुराणम्, कल्किपुराणम्, आदिपुराणमित्यादीनि। सौराण्युपपुराणानि यथा—साम्बपुराणम्, सूर्यपुराणम्, सौरधर्मपुराणम्, सौरधर्मोत्तरपुराणमित्यादीनि। शाक्तोपपुराणानि यथा—देवीपुराणम्, कालिकापुराणम्, महाभागवतम्, देवीभागवतम्, नन्दापुराणम्, सारदापुराणम्, बृहन्नन्दिकेश्वरपुराणमित्यादीनि।

तन्मध्ये यद्यपि कल्किपुराणं न विष्णुधर्मोत्तरवत् प्राचीनत्वमर्हति तथापि धार्मिकदृष्ट्या उपपुराणमिदं त्वतुलनीयमेव। नेदं स्वल्पतन्विति अग्राह्यम्। दशावतारमाहात्म्यनिर्मलं कल्किपुराणं भगवतः कल्केः वेदमार्गप्रतिष्ठाया अपूर्वतमं रसभरं वस्तु। धर्मस्य ग्लानिर्नातिदूरं वर्तते। अधर्मस्याभ्युत्थानं सघोषमेव हृदयपटं विदारयन्नास्ते। अस्मिन्नेवावसरे किमत्र चित्रं यदाबालवृद्धवनिताः सनातनधर्मे दत्तात्मानः कलिकालुष्यहारिणो भगवतो विष्णोरन्तिमावताररूपं कल्किं स्तुवन्ति। अतः कल्किमाहात्म्यसमुज्ज्वलं पुराणमिदं सर्वेषामेव प्रेमपदवीं भजते।

इतिहासविदां मते कल्किपुराणं न तादृशं प्राचीनत्वमर्हति। अस्य पुराणस्य हस्तलिखितमातृकानां पुष्पिकास्विदमुपलभ्यते यदिदं नाम श्रीमद्भागवतस्य अर्वाचीनो भागः, उताहो श्रीमद्भागवतस्य संक्षिप्तं रूपम्। प्रायशः सर्वास्वेव पुष्पिकासु इत्थमुल्लिखितमस्ति "इति श्रीकल्किपुराणेऽनुभागवते भविष्ये"। आगामिनि काले यद् भविष्यति तन्मूलकतयाऽस्य माहात्म्यं वरीवर्ति। सनातनहिन्दुदृष्ट्या पुराणानि द्वापरयुगे श्रीमद्व्यासदेवेन लिखितानि। अतः कलियुगसम्बन्धिनी कापि वार्ता लिखिता चेत् तर्हि भविष्यद्घटनविधायिनी नूनं स्यात्। वस्तुतः कलियुगस्यान्ते विष्णोर्माहात्म्यवर्णनमेवास्य पुराणस्य मुख्यं लक्ष्यम्। कलियुगे कल्क्यवताररूपेण जनिं लब्ध्वा विष्णुः स्वमाहात्म्यप्रचारद्वारा सर्वान् सुस्थिरान् करिष्यतीति वार्ता तत्र सुप्रसिद्धा। स कल्किः विष्णु-



यशसः पुत्रः। सुमतिश्चास्य मातुर्नाम। तस्य पितरौ शम्भलग्रामनिवासिनाविति।

सर्वास्वेव मातृकास्वस्यस्यांशतया विभागो न दृश्यते। साकल्येन पञ्चत्रिंशदध्यायात्मकं केवलं मुद्रितेषु संस्करणेष्वेवांशत्रये विभक्तम्। अस्य विभिन्नाध्यायस्य संक्षिप्तपरिचयोऽधुना प्रदीयते।

तत्र प्रथमाध्याये वैदिकतान्त्रिकादिरीत्या विघ्नेशं नमस्कृत्य कल्किमाहात्म्यमुद्घोष्यते। स कल्किः स्वयमेव हरिर्नारायणः। नैमिषारण्ये शौनकादय ऋषय सूतात् कलिधर्मं श्रोतुमैच्छन्। किन्तु तस्योत्तरे सूतो भागवतपुराणे यथा तेन मार्कण्डेयाय भागवतधर्मा निवेदितास्तदेव स वक्तुमारभते। अधर्मः स्वयमेव ब्रह्मणो जन्म लेभे। तस्यैवाधर्मस्य वंशे भयंकररूपी कलिरपि जन्म लब्ध्वा स्वकालुष्यं पृथिव्यां सर्वत्र यथायथं प्रचारयन्नास्ते। तस्मिन्नेवावसरे लोका अपि भृशं नीचमनसोऽवनतेः परां काष्ठामापन्नाः भयावहमपि परधर्ममाश्रित्य स्वेच्छया वेदपुराणविरुद्धाचरणे कृतमतयो विहरन्ति। तत्तापपीडिता धरित्री मनोदैन्यनिरासाय ब्रह्माणं प्रार्थितवती।

द्वितीयेऽध्याये ब्रह्मा विष्णुमुपागम्य धरित्रीविषयं तस्मै श्रावयति। विष्णुरपीमानि सर्वाणि निशम्य तस्य प्रतीकाराय सपदि एव शम्भलग्रामवास्तव्यस्य विष्णुयशसो गृहे आत्मानं प्रकटय्य पापभारोपशमाय यथोपयुक्तां व्यवस्थां गृह्णाति। विष्णुवचनादाश्वस्तो ब्रह्मा स्वालयं जगाम। विष्णोरनुरोधेन देवा अपि पृथिव्यामात्मनः परिग्रहं लभन्ते। नररूपेण विष्णोरवतरणं "कल्किरूपेण तस्य नामग्रहणमखण्डां पृथिवीं कलिप्रभावात् मोचयतु" इति तस्य भगवदवताररूपस्य कल्केः प्रतिज्ञा सर्वान् प्रमोदयति।

तृतीयाध्याये वेदादीनि सर्वशास्त्राणि पठित्वा भगवान् कल्किः भगवद्बिल्वोदकेश्वरशिवसकाशात् कञ्चन कामचारिणमश्वममूल्यं

शुकपक्षिणमथ च निशितं खड्गमेकं लब्धवान्। ततश्च स कल्किः शम्भल-ग्रामं प्रत्यागत्य वर्णाश्रमधर्मं द्रढयति, वेदमार्गं सुप्रतिष्ठापयति। अन्ते च माहिष्मतीनृपेण विशाखयूपेन सह कलियुगमाहात्म्यं प्रकटीकर्तुं प्रयतते। विशाखयूपनृपाय सृष्टेरुत्पत्तिस्थितिरित्यादिकं विषयं तथा ब्राह्मणानां चरित्रमाहात्म्यं कल्किः निवेदयति। सिंहलद्वीपवास्तव्यस्य राज्ञो बृहद्रथस्य कन्या पद्मावती नामधेयासीत्। लक्ष्म्या अवतार-रूपिण्यास्तस्याः सन्देशाहरणाय कल्किप्रेषितः शुकः सिंहलात् प्रत्यागत्य "शिववरात् पद्मावती नारायणमेव पतिरूपेण प्राप्स्यति" इति निवेदयति।

पञ्चमेऽध्याये सिंहलद्वीपस्य मनोहारिण्यत्यद्भुता च वार्ता शुकेन कीर्त्यते। अत्र पद्मावत्याः स्वयंवरसभायां सर्वे प्रार्थिनो यदेव पद्मावतीं प्रेमदृष्ट्या अवलोकितवन्तस्तदैव स्त्रीरूपेण परिणताः। तस्या एव कन्याया दासीत्वं स्वीचक्रुरिति निवेदयति।

षष्ठेऽध्याये कल्किनावरुद्धः शुकः पुनरपि सिंहलदेशे प्रत्यागत्य पद्मावत्या सह यथायथं वार्तालापं करोति। "अहं नारायणमेव पतिरूपेण लप्स्यामि, नान्यः कश्चित् श्रीहरेर्भिन्नो मम पतिर्भवितुमर्हति" इति पद्मावत्या आत्मनिवेदनं श्रुत्वा कल्किः प्रसीदति।

सप्तमेऽध्याये 'ओं नमो नारायणाये'ति अष्टाक्षरेण मन्त्रेण विष्णुध्यानं वर्णयति।

अष्टमतो दशमाध्यायेषु विष्णुध्यानस्य विशदं वर्णनं वर्तते। पद्मावत्याः सकाशात् तामामन्त्र्य च शुकः कल्किं प्राप्नोति। तस्यैव शुकस्य आग्रहातिशयेन दैवनिर्बन्धबलाच्च कल्किः सिंहलमागत्य पद्मावत्याः पाणिं गृह्णाति। तत्र स्वयंवरसभायां समागता ये चासन् भूतपूर्वा राजानः ते सर्वे दैवप्रसादात् कल्केरनुग्रहाच्च स्वं रूपं लभन्ते। विष्णोर्दशावतारं ते स्तुवन्ति।



एकादशद्वादशाध्याययोस्तेषामनुरोधेन कल्किः तेभ्यो नृपेभ्यो वर्णाश्रम-धर्ममुपदिशति। तस्मिन्नेवावसरे कल्केरिच्छयानन्ताख्यो कश्चिन् मुनिः तत्र समागम्य पुरुषोत्तमे क्षेत्रे आत्मनो विष्णुमायासम्बन्धिनीं काचिदभिज्ञतां प्रकटयति। अनन्तस्य मते कलौ भगवान् कल्किरेव एको यः खलु निखिल-प्राणिभ्यो मुक्तिं दातुमलम्।

त्रयोदशाध्याये स्वश्वशुरालयं सिंहलं परित्यज्य पद्मावत्या सह कल्किः पित्रालये पुनरागच्छति। कालक्रमेण अनयोर्दम्पत्योर्जयविजया-ख्यौ द्वे मित्रे जायेते। तत्र बौद्धानामुपद्रवं श्रुत्वा तं निर्भर्त्सितुं स कीकटाख्यप्रदेशे गत्वा तत्रासंख्यभक्तजनसमावेष्टितं जिनं पश्यति।

चतुर्दशाध्याये जिनोपदिष्टैः बौद्धैः सह कल्केर्महति रणे प्रायशः सर्वे बौद्धा विनाशमुपगच्छन्ति। अन्ते चेमे सर्वे म्लेच्छा आहूय कल्किं पराजेतुं वाञ्छन्ति।

पञ्चदशाध्याये कल्किस्तु बौद्धान् तथा म्लेच्छान् सर्वानपि पराजित्य तेन सह योद्धुमागताभ्यो म्लेच्छबौद्धस्त्रीभ्यो ज्ञानभक्तिपरमयोगमुपदिशति।

षोडशाध्याये कीकटप्रदेशात् प्रत्यागम्य चक्रतीर्थे बालखिल्यैः सह कल्केः वार्ता प्रचलति। तत्र ते सर्वे कुथोदरी इत्याख्याया राक्षस्याः तस्याः पुत्रात् विकञ्जात् भयभीता त्रस्ता भृशं पीडिताश्चेति विज्ञाय तयोर्हनने कृतमतिः स कल्किः हिमालयं गत्वा तान् हन्ति।

सप्तदशाध्याये तस्मिन्नेव हिमालये पर्वते सूर्यवंशस्थनृपस्य मरु-इत्याख्यस्य तथा चन्द्रवंशसंभूतस्य देवकी इत्याख्यस्य राज्ञो वर्णनमुप-लभ्यते। मरुः इक्ष्वाकुवंशगौरवं कल्कये निवेदयति। प्रसङ्गक्रमेण च भगवतो रामचन्द्रस्य कथा आलोच्यते।

अष्टादशाध्याये रामवंशस्य परिचय उपलभ्यते। तस्य वंशे बुध इत्यपरनामधेयस्य मरोर्जन्म अभूदित्यादिवार्ता प्रचलति। अत ऊर्ध्वं चन्द्रवंशस्य नृपाणां वर्णनं देवापिना क्रियते। तयोः सकाशाद् इदं

सर्वं विज्ञाय म्लेच्छानां पुक्कसानां च निधनान्ते अयोध्याया हस्तिनापुर्याश्च सिंहासने यथाक्रमं मरुः देवापिश्च राजा भविष्यत इति कल्किः प्रतिशृणोति। तस्यैवानुरोधेन राज्ञो विशाखयूपस्य कन्यां मरुः परिगृह्णाति। रुचिराश्वस्य कन्यां च देवापिः। कल्केः वरेण स्वर्ग्यं रथं लब्ध्वा मरुदेवापी प्रमुदितौ वर्णाश्रमधर्मस्य पुनः संस्थापनाय प्रयतेते।

एकोनविंशत्यध्याये कृतयुगे यथा चतुर्दशमन्वन्तराणां क्रमशः उत्पत्त्यादिकं भवति तथा सर्वं वर्णितमस्ति। कलिपीडिता देवादयः सर्वे कल्किमुपेत्य तेषामार्तिहरणाय प्रार्थयन्ते। विशसननगर्यां प्रविश्य कलिं हनिष्यामीति प्रतिज्ञाय भगवान् कल्किः स्वपुरात् प्रचलति।

विंशत्येकविंशत्यध्याययोः मरुः देवापिः अन्ये च विश्वस्तान् अनुचरान् संगृह्य कल्किः कलिनाशनाय कृतमतिः प्रयत्नमाश्रयते। विशसननगर्या धर्मः कलिना विताडितः। स एव धर्मं आत्मनः पराजयस्य प्रतिहिंसां जिघृक्षन् कल्किना सह प्रचलति। एतत् सर्वं निशम्य खशाः, काम्बोजाः, शबराः, बर्बराश्चीनाः, पुलिन्दाश्चोलाः, निषादा विशेषतः कोकः विकोकश्चेमे सर्वे कलिसहायकाः कल्किना सह योद्धुमुद्यताः। अस्मिन् समये पराजयं स्वीकृत्य कलिः अन्यस्मिन् वर्षे पलायते।

कल्किश्च यथेच्छं कलिं संयम्य निहन्ति। कल्केः पराक्रमात् कोकः विकोकश्च पञ्चत्वमुपगतौ।

द्वाविंशत्यध्यायतः सप्तविंशतितमाध्यायपर्यन्तं भल्लाटनगरे कल्केरुपस्थितिर्लिखिता। तस्मिन्नेव समये तत्र शशिध्वजनामधेयः कश्चिद् वैष्णवो नृपो राजासीत्। स राजा कल्केरागमनं श्रुत्वा तेन सह सकोपः क्रमितुं क्रमं बबन्ध। कल्किशशिध्वजयोर्मध्ये संघटिते घोरदुर्मदे रणे शशिध्वजो हतचेतनः कल्किना पराजितः। द्वैताद्वैतदर्शननिष्णातः स राजा सपत्न्यै सुशान्तायै द्वैताद्वैतमतवादस्य वैशिष्ट्यं प्राक् प्रतिपाद्य कल्किना सह तस्य युद्धं समर्थितवान्। किन्त्वधुना परास्तस्तं स कल्किं



स्तौति। अथ चात्मनः कन्यां रामां तस्मै विवाहार्थाय प्रयच्छति। अन्ते च पूर्वजन्मनि प्राप्तगृद्ध्रावस्थयोस्तयोः प्राग् जन्मनो विस्तृतं वर्णनमुपलभ्यते। कथाप्रसङ्गेन विष्णोर्महत्त्वम्, विष्णुपूजा, विष्णुभक्तिरित्यादीनि सर्वाणि व्याख्यायन्ते। प्राक् कृष्णाग्रजेन बलरामेण निहतो द्विविदो यथा स्वर्गं लेभे तथा सोऽपि राजा शशध्वजः स्वर्गं कामयते। प्रसङ्गेऽस्मिन् शशध्वजमुखात् श्रीकृष्णस्यापूर्वलीलाचातुरी सर्वेषां श्रोतॄणां मनो हरति।

अष्टाविंशत्यध्याये भगवतः कल्केरपरा अद्भुता कथाः प्रचलन्ति। काञ्चनपुर्यां स विषकन्यां स्वर्गं निनाय। मुक्तिं च तस्यै दत्तवान्। तथा अयोध्यायां मथुरायां वारणावत्यां पुण्ड्रे अङ्गे वङ्गे कीकटे च स स्वसेवकान् सिंहासनं प्रददाविति सर्वं वर्ण्यते।

एकोनत्रिंशत्तमेऽध्याये भगवान् कल्किः शम्भलग्रामे प्रत्यागच्छति। एवं च तत्र लुप्तप्रायं कृतयुगं पुनः स गौरवमाहात्म्येन दृढं प्रतिष्ठापयति। कोकामुखतीर्थे शशिध्वजः मायां प्रशशंस। अस्मादेव कारणात् तस्य मुक्तिः अनिवार्या इति कल्किः उद्घोषयति।

त्रिंशत्तमेऽध्याये सोऽयं विष्णुयशा राजा राजसूयं तथापरं च यज्ञं करोति। तत्र यज्ञस्थले नारदः समागम्य तस्मै विष्णुयशसे मायायाः स्वरूपं कल्केः माहात्म्यं चोपदिशति। शम्भलग्रामे भगवदवतारभूतस्य परशुरामस्योपस्थितिर्घुष्यते।

एकत्रिंशत्तमेऽध्याये रुक्मिणीव्रतोपाख्यानं वर्णितमस्ति। केन प्रकारेण व्रतमिदमनुष्ठीयते, कीदृशी वा विधिः, किं वा तस्यानुष्ठानफलमिति सर्वं रामेण पृष्टः परशुरामो व्याख्याति। कचशर्मिष्ठादेवयान्या आख्यानावसरे संनिविष्टमेवं पुत्रलाभार्थमेव रुक्मिणीव्रतमवश्यमाचरणीयमिति निर्गलितार्थो बोध्यते।

द्वात्रिंशत्त्रयस्त्रिंशत्तमेऽध्याये भगवतः कल्केः स्त्रीभिः सह केलिकला प्रेममयो विलासश्चोपलभ्यते। ब्रह्मादयः प्रमुखा देवास्तत्र शम्भलग्रामे आगच्छन्ति, एवं शनैः स भगवान् कल्किः स्वर्गं गच्छति।

चतुस्त्रिशत्तमेऽध्याये जह्नुकन्याया गङ्गायाः स्तुतिः ।

पञ्चत्रिंशत्तमेऽन्तिमेऽध्याये कल्किपुराणस्य सारोऽस्य ग्रन्थस्य पाठफलमित्यादीनि सर्वाण्युपलभ्यन्ते ।

यथा शशिध्वजो राजा वैष्णवीयं द्वैताद्वैतवादम् व्याख्याति, एवं यथा विष्णोरवतारभूतस्य भगवतः कल्केरुत्पत्तिमाहात्म्यम्, विष्णुधर्मप्रचारः, परधर्मस्यानुपादेयत्वमत्र समुपलभ्यन्ते तथानेनानायासेनैव कैश्चिदनुमातुं शक्यते यदयं ग्रन्थो विशिष्टो वैष्णवप्रबन्ध एव नान्यः कश्चित् । तत्र वासुदेवस्याष्टाक्षरमन्त्रपूजनेन विष्णोरवतारस्य रामचन्द्रस्य माहात्म्यं वैशद्येन वर्ण्यते । कृष्णबलभद्रादीनां महाभारतसूत्रधाराणां वैष्णवपुरुषोत्तमानां लीलामाहात्म्यविशदीकरणेनान्ते च बौद्धादिकानां पाषण्डादीनां मतानि निराकृत्य वैष्णवधर्मस्य प्रचारप्रसङ्गेन मतमिदं दृढतरं समर्थितं भवति । यथा भगवान् कल्किः खशकाम्बोजशवरबर्बरचीनपुलिन्दचोलनिषादादीन् पराजित्य बौद्धधर्मस्य माहात्म्यं दूरीकृत्य च वैष्णवधर्मेणेदं भारतवर्षं प्लावितमकरोत् तथा तत्र भगवतः शङ्कराचार्यस्य वेदमार्गविरोधिनां बौद्धजैनधर्माणां पराभव एव स्मर्यते । अतः कल्किपुराणस्य विरचनकालः शङ्कराचार्यात् प्राचीनः कदापि न भवितुमर्हति । तथा च नैकेष्वपि प्रसिद्धेषु स्मृतिनिबन्धेषु कल्किपुराणात् वचनान्युद्धृतानि दृश्यन्ते । अनेनाप्यस्याधुनिकत्वं सूच्यते । तथापि ईशवीयात् सप्तदशशतकात् प्रागेवास्य विरचनकार्यं सम्पन्नमासीत् । डा० आर० सी० हाजरा ( स्टडीज इन दी उपपुराणास वाल्यूम १, पृष्ठ ३०८) इदं मतं पुष्णाति यदयं ग्रन्थो वङ्गदेश एव लिखितः । यावत्यो मातृका उपलभ्यन्ते सर्वा एवास्या मातृका वङ्गलिपिभिरेव लिखिता इत्येषां प्रौढपण्डितानां मतम् । किन्तु तदिदं नास्माभिः समर्थ्यते । यतो हि अस्माभिरालोचिता 'क' इत्याख्या हस्तलिखिता कल्किपुराणस्य पुस्तिका या नाम वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपाठागारे सुरक्षिता वर्त्तते, सा देवनागरलिपिभिरेव लिखिता ।

# कल्किपुराणसम्पादनाय संगृहीतानामालोचितानां हस्तलिखितपुस्तिकानां परिचयः

वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनग्रन्थागाराद् द्वे हस्तलिखितपुस्तिके, कलिकातासंस्कृतकालेजग्रन्थागारादेका हस्तलिखितपुस्तिका समानाय्य तथा मुद्रितकल्किपुराणस्य संस्करणानि पर्यालोच्य ता अवलम्ब्यैव संस्करणमिदं प्रस्तूयते । आलोचनसौकर्यार्थमुक्ता हस्तलिखितपुस्तिका यथाक्रमेण क ख ग इति रूपेणाभिधीयन्ते । इदं पुराणं तावत् कलिकातानगर्यां जीवानन्दविद्यासागरेण, जगन्मोहनतर्कालङ्कारेण, पञ्चाननतर्करत्नेन च भिन्नभिन्नसमये मुद्रापितं प्रकाशितं च । अथ काश्यां भारतधर्ममहामण्डलतोऽपि प्राकाश्यं नीतम् । सर्वमिदं मुद्रितसंस्करणं प्रायशः सममेव पाठमाधत्ते अत इमे सर्वे घ इति रूपेणाभिधीयन्ते । अधुना आसां हस्तलिखितपुस्तिकानां संक्षिप्तपरिचयः प्रदीयन्ते ।

( क ) वाराणसेयसंस्कृतविश्वविद्यालयसरस्वतीभवनग्रन्थागारस्य पुस्तिका ।

कुबेरनाथ शुक्ल, डेस्क्रिपटिभ् क्याटलग आफ संस्कृत म्यानुस्क्रिप्ट्स् इन दि सरस्वती भवन, भल्युम ५, नं० १४७८३ प्राचीने देशजपत्रे लिखिता, सम्पूर्णा पत्रसंख्या ६३ । लिपिकालः संवत् १८९५ । देवनागरलिपिभिः लिखितेयम् । दैर्घ्येण ३२'४ से० मी०, प्रस्थेन च १५'३ से० मी० द्वयम् । सर्वपत्रेषु द्वादशपङ्क्तयः, किन्तु अन्तिमपत्रे ( ६३ ख ) सप्त एव पङ्क्तयः ।

आरम्भः—

श्रीगणेशाय नमः, श्रीसरस्वत्यै नमः, श्रीकल्किने भगवते नमः, ईश्वराय मादृग्जनोपकृतये धृतविग्रहाय श्रीमन्नृपेन्द्रजयसिंहसुपूजिताय ज्ञानात्मने कृतयुगादिकराय सिद्धयै श्रीसुशीलायै नमः ।

सेन्द्रा देवगणा मुनीश्वरजना लोकाः सपालाः सदा
स्वं स्वं कर्म सुसिद्धये प्रतिदिनं भक्त्या भजन्त्युत्तमाः ।
तं विघ्नेशमनन्तमच्युतमजं सर्वज्ञसर्वाश्रयं
वन्दे वैदिकतान्त्रिकादिविविधैः शास्त्रैः पुरो वन्दितम् ॥

अन्तिमः अंशः—

कल्किपुराणेऽनुभागवते भविष्ये पञ्चत्रिंशोऽध्यायः ।
अज्ञानाद् विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
विपरीतं तु तत् सर्वं क्षमस्व परमेश्वरः ॥

१ संवत् १८९५ शाके १७९० मीति पौष सुदि १४ शनिवासरे लिपीकृतमिदं पुस्तकं, शुभं भूयात्, माङ्गल्यं दद्यात्, श्रीकृष्णाय नमः ।

( ख ) वाराणसेयसंस्कृतविश्वविद्यालयसरस्वतीभवनग्रन्थागारस्य पुस्तिका ।
कुबेरनाथ शुक्ल, डेस्क्रिप्टिभ् क्याटलग आफ संस्कृत म्यानुस्क्रिप्ट्स् इन दि सरस्वती भवन, भल्युम ५, नं० १५५२३, प्राचीने देशजे पत्रे लिखिता । खण्डिता चेयम् । संपूर्णा पत्रसंख्या ३०, लिपिकालो नोल्लिखतः, वङ्गलिपिभिः लिखितेयम्, दैर्घ्येण ३२'८ से० मी० प्रस्थेन च १२'२ से० मी० इयम्, सप्तपङ्क्तिद्वादशपङ्क्तिभेदेन पत्रेषु पङ्क्तिसंख्या भिन्ना ।

आरम्भः—

ओं नमो गणेशाय, ओं नमो वेदव्यासाय ।
सेन्द्रा देवगणा मुनीश्वरजना लोकाः सपालाः सदा
स्वं स्वं कर्म सुसिद्धये प्रतिदिनं भक्त्या भजन्त्युत्तमाः ।
तं विघ्नेशमनन्तमच्युतमजं सर्वज्ञसर्वाश्रयं
वन्दे वैदिकतान्त्रिकादिविविधैः शास्त्रैः पुरो वन्दितम् ॥

अन्तिमः अंशः—रूपिणो मामथोचुस्ते भोऽनन्त इति ते दश ।
दिग्वाताकर्क प्रचे··········॥



( ग ) कलिकातासंस्कृतपाठागारस्य पुस्तिका ।
हृषीकेशशास्त्री शिवचन्द्र गुँई, डेस्क्रिपटिभ् क्याटलग आफ संस्कृत म्यानुस्क्रिप्ट्स् इन क्यालकटा संस्कृत कलेज, भल्युम ४, नं० ११, सुप्राचीने देशजपत्रे लिखिता । स्थले त्रुटिता, संपूर्णा पत्रसंख्या ८०, लिपिकालो नोल्लिखितः, वङ्गलिपिभिः लिखितेयम्, दैर्घ्येण ४०'६४ से० मी०, प्रस्थेन च १२'७० से० मी० इयम् । द्विपङ्क्त्यष्टपङ्क्तिभेदेन पत्रेषु पङ्क्तिसंख्या भिन्ना ।

आरम्भः—ओं नमो गणेशाय

सेन्द्रा देवगणा मुनीश्वरजना लोकाः सपालाः सदा
आत्मकर्मसुसिद्धये प्रतिदिनं भक्त्या भजन्त्युत्तमाः ।
तं विघ्नेशमनन्तमच्युतमजं सर्वज्ञसर्वाश्रयं
वन्दे वैदिकतान्त्रिकादिविविधैः शास्त्रैः पुरो वन्दितम् ॥

अन्तिमः अंशः—

सजलजलददेहो वातवेगैवराहः
प्रमथितकरवालः सर्वलोकैकपालः ।
कलिकुलबलहन्ता सत्यधर्मप्रणेता
कलयतु कुशलं वः कल्किरूपः स भूपः ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पञ्चविंशोऽध्यायः समाप्तश्चायं ग्रन्थः ।

श्रीहरये नमः

# ग्रन्थपञ्जी

अग्निपुराण— पञ्चाननतर्करत्नेन सम्पादितं, वङ्गवासी-संस्करण, कलिकाता, १३१४

आचारभूषण— त्र्यम्बक ओक इत्यनेन विरचितम्, हरिनारायण आप्टेन प्रकाशितं, आनन्दाश्रम संस्कृत सिरीज, पुना, १९०८

आचारादर्श— श्रीदत्तोपाध्यायेन विरचितम्, वाराणस्यां प्रकाशितम्, १९२४

आपस्तम्बधर्मसूत्र— हरदत्तमिश्रस्य टीकया सह, ए० चिन्नस्वामि-शास्त्रिणा सम्पादितम्, काशी संस्कृत सिरीज, नं० ९३, वाराणसी, १९३२

आर्यमञ्जुश्रीमूलकल्प— टी० गणपतिशास्त्रिणा सम्पादितं, त्रिवान्द्रम संस्कृत सिरीज, त्रिवान्द्रम, १९२०, १९२२

आश्वलायनगृह्यसूत्र— हरदत्ताचार्यस्य अनाविलटीकया सह टी० गणपतिशास्त्रिणा सम्पादितम्, त्रिवान्द्रम संस्कृत सिरीज, नं० ७८, त्रिवान्द्रम, १९२३

ऊनविंशसंहिता— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी-संस्करण, कलिकाता, १३१६

ऋग्वेदसंहिता— सायणाचार्यभाष्येण सह मैक्समूलरेण सम्पादितम्, लण्डन, १८४९-१८७४

कर्पास इन्सक्रूप्सनुं लैटिनारुम्

कात्यायनश्रौतसूत्र— विद्याधरशर्मणा सम्पादितम्, अच्युतग्रन्थमाला कार्यालय, वाराणसी सं० १९८७

कल्किपुराण— जीवानन्दविद्यासागरेण प्रकाशितम्, कलिकाता, १८९०

कल्किपुराण— जगन्मोहनतर्कालङ्कारेण प्रकाशितम्, कलिकाता, १८७३

कल्किपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, कलिकाता, १३१५

कल्किपुराण— भारतधर्ममहामण्डलतः प्रकाशितम्, काशी, संवत् १९६३

कालनिर्णय— माधवाचार्यविरचितम्, चन्द्रकान्ततर्कालङ्कारेण सम्पादितम्, एसियाटिक सोसाइटी, कलिकाता, १८०९

कादम्बरी— काशीनाथ पाण्डुरङ्ग परवेण सम्पादितम्, निर्णयसागर प्रेस, बम्बे, १९३२

किरातार्जुनीय— वासुदेव लक्ष्मणशास्त्री पणशीकरेण सम्पादितम्, निर्णयसागर प्रेस, बम्बे, १९३३

कृत्यकल्पतरु— लक्ष्मीधरविरचितम्, षष्ठो भागः, व्रतकाण्ड, के० बी० रङ्गस्वामी आयङ्गारेण सम्पातिदम्, गायकवाड़ ओरियण्टल रिसर्च सिरीज, नं० १२३ बड़ौदा, १९५३

केम्ब्रिज हिस्ट्री आफ इण्डिया— वाल्यूम ३, केम्ब्रिज, १९२८

कैटालाग आफ संस्कृत मैनुस्क्रप्ट्स् इन दी लायब्रेरी आफ हिज हाइनेस महाराजा आफ बीकानेर—आर० एल० मित्र, कलिकाता, १८३३



कैटालाग आफ संस्कृत मैनुस्क्रप्ट्स् इन दी लाईब्रेरी आफ डेकान कालेज— पार्ट २, आर० जी० भण्डारकर, पूना, १८८४

कैटालाग आफ संस्कृत मैनुस्क्रप्ट्स् इन सरस्वती भवन, बनारस— वाल्यूम ५, श्री कुबेरनाथशुक्ल, वाराणसी, १९५८

खादिरगृह्यसूत्र— रुद्रस्कन्दटीकया सह ए० महादेवशास्त्रिणा तथा एल० श्रीनिवासाचार्येण सम्पादितम्, गवर्नमेण्ट ओरिएण्टल लाइब्रेरी सिरीज, बिब्लियोथेका संस्कृत ४१, माइसोर, १९१३

गरुड़पुराण— क्षेमराज श्रीकृष्णदासेन प्रकाशितम्, वेङ्कटेश्वर प्रेस, बम्बे, १९६३

गेसिस्टे डेर इण्डियेन लीटारेटुर— एम० भिन्तारनीत्स, लाईपजिक, १९०६-१९२०

गोभिलगृह्यसूत्र— चन्द्रकान्ततर्कालङ्कारेण सम्पादितम्, एसियाटिक सोसाइटी, कलिकाता, १८०२

गौतमधर्मसूत्र— हरदत्तकृतया मिताक्षरावृत्त्या सह हरिनारायणआप्तेन प्रकाशितम्, आनन्दाश्रम संस्कृत ग्रन्थावली, ग्रन्थांक ६१, पूना, १९१०

जर्नल आफ दी अमेरिकन ओरिएण्टल सोसाइटी—

जर्नल आफ दी एसियाटिक सोसाइटी—

जर्नल आफ ओरिएण्टल रिसर्च—

जर्नल आफ दी गङ्गानाथ झा रिसर्च इन्स्टिटयूट—

जर्नल आफ दी बाम्बे ब्राञ्च आफ दी रायल एसियाटिक सोसाइटी—

जर्नल आफ दी रायल एसियाटिक सोसाइटी—

जर्नल आफ दी विहार एण्ड उड़ीसा रिसर्च सोसाइटी—

जैमिनिगृह्यसूत्र— डब्ल्यू कैलण्ड इत्यनेन सम्पादितम्, पञ्जाब संस्कृत सिरीज, नं० २, मोतीलाल बनारसी दास, लाहौर, १९२२

डास पराणपञ्चलक्षण— कीरफेल इत्यनेन रचितम्, लाईडेन, १९२७

डी कोसमोग्राफी डेर इण्डार— कीरफेल इत्यनेन रचितम्, वन, १९२०

डेर उरस्प्रुं उण्ड डी एण्टभीकलुं डेर वामन-लीजेण्डे इन डेर इण्डियेन लीटरेटुर—गयाप्रसादत्रिपाठिना रचितम्, अटो हारासोभीत्स्, भीसवाडेन, १९६८

डेस्क्रिप्टिव कैटालाग आफ संस्कृत मैनुस्क्रप्ट्स् इन मिथिला—बाल्यूम ३, के० पी० जायसवाल एण्ड ए० वी० बनर्जी शास्त्री, पटना, १९२७





डेस्क्रिप्टिव कैटालाग आफ संस्कृत मैनुस्क्रप्ट्स् इन दी लाइब्रेरी आफ दी संस्कृत कालेज, कलकत्ता— बाल्युम ४, कलकात्ता, १९०२

तारीक-इ-फिरोजशाही— इलियट, बाल्यूम ३,

देवीपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३३४

नोटिसेस आफ संस्कृत मैनुस्क्रप्ट्स् पब्लिस्ड अण्डर आर्डर्स आफ दी गवर्नमेन्ट आफ बंगाल— आर० एल० मित्र, कलिकाता, १८७१, १८८८

पद्मपुराण-ए स्टाडी— अशोक चट्टोपाध्याय शास्त्री, संस्कृत कलेज, कलिकाता, १९६७

पितृभक्ति— श्रीदत्तोपाध्यायेन विरचितम्, अशोक चट्टोपाध्याय शास्त्रिणा सम्पादितम्, चौखम्बा संस्कृत सीरिज, वाराणसी, १९७१

ब्रह्मपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३१६

भविष्यपुराण— वेङ्कटेश्वर संस्करणम्, खेमराज श्रीकृष्णदासेन सम्पादितम्, बम्बई

भागवतपुराण— श्रीधरस्वामिविरचितया टीकया सह पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३३४

भारद्वाजगृह्यसूत्र— हेनरियट जे० डब्ल्यू० सलोमन्स इत्यनेन सम्पादितम्, लाईडेन, १९१३

मत्स्यपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३१६

मनुस्मृति— कुल्लुकभट्टस्य टीकया सह पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३२०

मानवश्रौतसूत्र— गेलोलर इत्यनेन सम्पादितम्, लाईपजिक, १९२१

मार्कण्डेय पुराण— पञ्चाननतर्करत्नेन प्रकाशितम्, वङ्गवासी-संस्करणम्, कलिकाता, १३१६

याज्ञवल्क्यस्मृति— मिताक्षरया सह वासुदेवलक्षण शास्त्री पणसीकरेण सम्पादितम्, तृतीयं संस्करणम्, पाण्डुरंग-जवजीना प्रकाशितम्, बम्बई, १२९४

शिवपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३१४

शिशुपालवध— चौखम्बा विद्याभवन, वाराणसी, १९६५

श्राद्धकल्प— श्रीदत्तोपाध्यायेन विरचितम्, अशोक चट्टोपाध्याय शास्त्रिणा सम्पादितम्, संस्कृत विश्वविद्यालय, वाराणसी, १९७१

समयप्रदीप— श्रीदत्तोपाध्यायेन विरचितम्, अशोक चट्टोपाध्याय-शास्त्रिणा सम्पादितम्, एसियाटिक सोसाईटी, कलिकाता, १९७१





स्कन्दपुराण— पञ्चाननतर्करत्नेन सम्पादितम्, वङ्गवासी संस्करणम्, कलिकाता, १३१८

स्वर्गखण्ड आफ दी— अशोक चट्टोपाध्यायशास्त्री, आल इण्डिया पद्मपुराण काशीराज ट्रास्ट, वाराणसी, १९७२

स्मृतितत्त्व— रघुनन्दनभट्टाचार्यविरचितम्, खण्डद्वयात्मकम्, जीवानन्दविद्यासागरेण सम्पादितम्, कलिकाता, १८९५

स्मृतितत्त्व— रघुनन्दनभट्टाचार्यविरचितम्, वाल्यूम १, श्रीरामपूर १८३४
वाल्यूम २, श्रीरामपूर १८८५,

हरिभक्तिविलास— गोपालभट्टेन विरचितम्, श्यामाचरणकविरत्नेन सम्पादितम्, कलिकाता, १३१८

हिस्ट्री आफ इण्डियान लिटरेचर— एम० भिनतारनित्स्, वाल्यूम १, कलिकाता, १९२७

हिस्ट्री आफ धर्मशास्त्र— पी० वी० काणे, वाल्यूम १, भण्डारकर ओरिएण्टल रिसर्च इन्स्टिटयूट, पूना, १९३०

हिस्ट्री आफ वेंगल— वाल्यूम २, यदुनाथ सरकार इत्यनेन सम्पादितम्, ढाका विश्वविद्यालय, १९४८

हिस्ट्री आफ मिथिला— उपेन्द्रठाकुर, मिथिला इन्स्टिटयूट, दरभंगा, १९४८

हिस्ट्री आफ संस्कृत लिटरेचर— वाल्यूम १, एस० एन० दासगुप्ता एण्ड एस० के० दे, यूनिवर्सिटो आफ कलकत्ता, १९४७

# शब्दसूची

ई



उ



ऋ



ओ



क







ख



ग

श

### स







### ह

# श्लोकानुक्रमणिका

## अ

ख





ग



घ



च

द







ध

## ब

भ



म







य

र







ल



व

श

ह